दे पुरो जित्यां॑हविषे च सवाज्यक्षायां॑शुध्ये च-नौ रन्ध्रे चोत्तमायामाद्यं ध्यमायां तृतीयमाद्यायां बो-धीये प्रवाज्याद्ययोर्गाथे तृतीयं द्विःकृष्टं चतुर्थमन्त्या-यां वाशेध्यमपादयोरन्त्यानित्रीणि चत्वारिपिबंतम-यंत॑हिवैछन्दसेकमश्वेर्वानहोजितस्मैहशंथीस्यग्नेभिः

---

रयोः प्रतिषेधः । *सिष्ठे च* वयमेनायां वासिष्ठे च योनावेव उपायस्य द्वितीयस्य वृद्धिः षंता३ । *हार द्वितीयं नदे पुरोजि-त्याम्* नानदे पुरोजित्यां तृचे प्रतिहारद्वितीयं वर्द्धते *हविषे च सवाज्यक्षायाम्* सौहविषेसवाज्यक्षायां प्रातिहाराद्वितीयं वर्द्धते । गोभाइ ।*शुध्ये च नौ* शुध्ये च योनावेव प्रातिहाराद्वितीयस्य वृद्धिः । अस्मा ३ अव उत्तरयोरन्यत्र प्रातिषेधः । *रन्ध्रे चोत्तमायाम्* द्वितीयेमौक्ष्णोरंध्रे उत्तमायां स्तोत्रीयायां प्रातिहार-द्वितीयं वर्द्धते।*आद्यं ध्यमायाम्* मध्यमायां स्तोत्रीयायां प्रति-हाराद्यमक्षरं वर्द्धते । *तृतीयमाद्यायाम्* आद्यायां तु स्तो-त्रीयायां प्रतिहारतृतीयं वर्द्धते । *बोधीये प्रवाज्याद्ययोर्गाथे तृतीयं द्विःकृष्टम्* जराबोधीये प्रवाज्याद्ययोरुद्गीथतृतीयमक्षरं द्विष्कृष्टं भवति । क्षाः सहा२३ । *चतुर्थमन्त्यायाम्* । अत्रैवा-न्त्यायां स्तोत्रीयायां उद्गीथचतुर्थं द्विःकृष्टं भवति । हा ३ ई न्द्रास्या ३कू । *वाशेध्यमपादयोरन्त्यानि त्रीणि* । वाशे उ पुनानः सोमादिषुमध्यमेषु पादेषु अन्त्यानि त्रीण्यक्षराणि वर्द्धते पादान्तेषु । *चत्वारिपिबंतमयंत॑हि* । पिबन्तंकद्रुयोः । अ-यंयः । पुरोतांहिस्वराजं । एतेषु त्रिषु पादान्तेषु अन्त्यानि चत्वा-रि चत्वार्यक्षराणि वर्द्धन्ते* । वैछन्दसेकमश्वेर्वानहोजितस्मैदृगृ-शंथीस्यग्नेभिः कृष्टानि *वाछन्दसे साकमश्वे *आयः पुरमग्ने

कृष्टानि दैर्घे व्रात्याग्निष्टुतोर्गीथद्वितीयसप्तमे कृष्टे स्वासु द्वितीयषष्ठे प्रस्तो तृतीयमर्मृ चतुर्थं थमोच्च द्वितीयं ज्ञीये सर्वत्र ककुभि चतुर्थं योनौ वैयश्वे सप्तमं पञ्चममुत्तरयोरेकर्चेष्टमं गीथचतुर्थं च ॥ ३ ॥

---

तमग्ग्रतृचयोर्वानहो जितमस्मैदशंथीस्यग्नेभिः एतानि द्वादशाक्षराणि कृष्टानि भवन्ति । नभन्योनार्वासूरोन । अस्थाद्धो यजि । मर्त्तौयो अस्मै । भद्रंश्हृदि । स्पृशं साथोरथी तस्या । ज्योतिरग्ने विश्वेभिः *दैर्घे व्रात्याग्निष्टुतोर्गीथद्वितीयसप्तमे कृष्टे* दैर्घश्रवसे व्रात्याग्निष्टुतोरुद्गीथद्वितीय सप्तमे अक्षरे कृष्टे भवतः । त्वेमोम पाहिनो अग्न इति च । *स्वासु द्वितीयषष्ठे* स्वासु योविश्वायां उद्गीथद्वितीयषष्ठे कृष्टे भवतः । *प्रस्तो तृतीयं* मध्यमायां उद्गीथद्वितृतीयं कृष्यते ॥ मर्मृचतुर्थं *मर्मृज्यन्त इत्युद्गीथचतुर्थं कृष्यते *थमोच्चं द्वितीयं ज्ञीये सर्वत्र *प्रथमोच्चद्वितीयमक्षरं ज्ञीये ज्ञीये सर्वत्र कृष्यते । तृतीयपादे प्रथमोच्चं भवति *ककुभि चतुर्थं *स्वासु यज्ञायज्ञीये उत्तरयोः स्तोत्रीययोः ककुभौ भवतः । तयोः प्रथमोच्चचतुर्थं कृष्यते । ऊर्जोनपा ३२ भुवद्वाजे ३२ *योनौ वैयश्वे सप्तमम्* वैयश्वे योनावेव प्रथमोच्चे सप्तमं कृष्यते अत्रापि तृतीयपादे प्रथमोच्चं सत्राचियामघवाना ३२ म् *पञ्चममुत्तरयोः* उत्तरयोः स्तोत्रीययोः प्रथमोच्चे पञ्चमं कृष्यते । तंश्हि स्वराजं उतोपमानं *एकर्चेच* वैयश्वे प्रथमोच्चाष्टमं कृष्यते । आरन्नयायोनिमृता *गीथचतुर्थं च* तस्मिन्नेवैकर्चे वैयश्वे द्गीथचतुर्थं कृष्यते । चकारः

तरे हारादि रनुत्तरयोः स्वासु नवेगीथादि रयोनौ शोकेमान्त्ययो र्विछन्दः स्वाग्नेये ककुभे च योनौ सामराजे च पादान्ते कांपा पदादौ च दीर्घे न जागृविर्देव-

समुच्चयार्थः। अपोवसा ॥

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये प्रथमस्य तृतीया कण्डिका समाप्ता ॥

*तरे हारादिः* रथन्तरे प्रतिहारादिः सर्वत्र वर्द्धते *अनुत्तरयोः स्वासु* स्वासु तृचे उत्तरयोः स्तोत्रीययोः प्रतिहारादेर्वृद्धिप्रतिषेधः *नवेगीथादिः* उत्तरे मानवे सोमउष्ट्रादिषु उद्गीथादेर्वृद्धिः *अयोनौ* योनौ नित्वामग्नायां वृद्धि प्रतिषेधः *शोके मांत्ययोः* त्रैशोके मध्यमांत्ययोः स्तोत्रीययोरुद्गीथादिर्वर्द्धते *विछन्दः स्वाग्नेये* विछन्दस्सुबृहदाग्नेये अग्निनरायां उद्गीथादेर्वृद्धिः। *ककुभे च योनौ* त्रैककुभे योनावेव प्रथमायामित्यर्थः। उद्गीथादिर्वर्द्धते उत्तरयोरन्यत्र च प्रतिषेधः *सामराजे च* सामराजे च योनावेव उद्गीथादेर्वृद्धिः पवित्रायां प्रतिषेधः *पादांते कांपापदादौ च दीर्घे* असम्बद्धमिदं वक्ष्यत्युपरिष्टात्। इदं संघातस्त्रिष्टुप्सु भवति। पार्थवाराहवासिष्ठकुत्सरथीयादिषु। इदं तए३ परा३उतए३का३य एत्र इदं संघातः अन्नयवद्वितीयं पूर्वसाकाङ्क्षितं विशिष्यते। पदान्ते अक्षरे ह्रस्वे दीर्घे च पदादौ कांपा भवति। यथा न दयन्ना३ इथी३ तथातिस्तोवाच ईरयाति *न जागृविर्देवस्य कंचिद्द्राष्ट्रमारुसूरिकारिदाथुपीति* नकारः प्रतिषेधे। एतेषु पूर्वलक्षणप्राप्तकांपापर्वप्रतिषिध्यते। स ईरथोनः, शुष्मीशर्द्धोन, अत्र न कारः पार्थवासि-

स्य कंचिद्धावृमारुस्सूरिकारिदाशुपीति राजनेचाद्ययोऽ-
रतृतीये जगतीषु च वाराहे परयोश्चान्तेषु श्यैते गीथ-
षष्ठं त्रिष्टुप्सु दशमं मध्यमायां द्वादशं नित्रे गीथषष्ठं
रुपञ्चमं ह्रस्वायाङ्गीथादिर्वार्द्धा मागासोमस्पतिः
------
छ्वाज्यदोहेषु । विचक्षणो जागृविर्वासिष्ठे देवो देवस्य वासिष्ठे
सफायां वृक्षं न पक्वं वासिष्ठे । पुरुमेध्यश्चित्तबृहत्सोमो वावृधो-
मत्सिसशार्द्धो नपारु । नयत्स्सूर्येसिष्ठेषु सतोधनं कारि मत्यवर्चित्त-
दाशुनेदानींपीतिः । त्रीण्यप्यौशने यथासंख्येनोदाहरणानि
*राजनेचाद्ययोः* चकारेणापवादाधिकारोऽनुकृष्यते राजने
चाद्ययोः स्तोत्रीययोः कांपा न भवन्ति *अतृतीये* तृतीये
पादे भवत्येवकांपा आद्ययोः स्तोत्रीययोः *जगतीषु च वा-
राहे* प्रोअयास्यां वाराहे कांपाप्रतिषेधः चशब्दादपवादा-
धिकारः । *परयोश्चान्त्येषु* वाराहात्परयोर्वासिष्ठयोर्द्धर्त्तासा-
विसोमयोः अन्तेषु पादेषु कांपा न भवति चशब्दादपवादः *श्यैते
गीथषष्ठम्* श्यैते गीथषष्ठमक्षरं वर्द्धते । *त्रिष्टुप्सु दशमं* श्यैते
त्रिष्टुप्सु तदिदासेत्यत्र उद्गीथदशममक्षरं वर्द्धते । *मध्यमायां
द्वादशम्* अत्रैव मध्यमायां उद्गीथे द्वादशमक्षरं वर्द्धते । *नित्रे
गीथषष्ठं* पूर्वे जनित्रे उद्‌गीथषष्ठमक्षरं वर्द्धते । *रु पञ्चमं* रु
शब्दः पञ्चमोवर्द्धते गिर्रिनपुरु । *ह्रस्वायां गीथादिर्वार्द्धा*
ह्रस्वायां बृहद्दोपशायां उद्‌गीथादिर्वार्द्धस्वतन्वा भवति अत्र
द्विपात्प्रस्तावः । उद्‌गीथादौ मागायना सा ऊहगीतौ वार्द्धस्वत-
न्वा पञ्चाक्षरा भवति । ना३त्वावज्रिन् सा एवंविधा द्रष्टव्या
*मागा सोमस्पतिः* सहस्रधारायां सोमस्पातेरित्यत्र मागायतैव
भवति वार्द्धस्वतन्वा । *सेधेहाद्द्वितीये यथर्च्चं भवति* उत्सेधे
हाद्द्वितीये स्तौभिके हाशब्दे प्रत्यये पूर्वमक्षरं यथर्च्चं भवति ।

सेधेहाद्वितीये यथर्चं भवत्यषिणोदनः सर्वत्र पादतृतीयतुरीयं वृद्धमन्त्यस्यावृद्धं वर्त्ते च तृतीयं विश्वासां विश्वास्ते मराय आधानन्दे अनुपादं नन्दायाः स्थानेमागायता परिदुहाशकुपुरः सखातं न्दुदक्षादिषु च नंदापरमेकोच्चं दूव्युच्चामिन्द्रनावेकं नीचं

---

*अषिणोदनः* षिणः दनः समुद्रस्याधिविष्टपेमनीषिणः । परिस्वानश्चक्षसेदेवमादनः एतयोर्न यथर्चं भवति । *सर्वत्र पादतृतीयतुरीयं वृद्धं* सर्वत्र उत्सेधे तृतीये पादे चतुर्थमक्षरं वृद्धं भवति *अन्त्यस्यावृद्धम्* अन्त्यस्य पादस्य चतुर्थमक्षरं सर्ववृद्धम् *वर्ते च* अभीवर्त्ते तृतीये पादे चतुर्थमक्षरं च कृष्यते । *तृतीयं विश्वासां विश्वास्ते* अभीवर्त्ते पुन विश्वासां तनुतां विश्वास्तेस्पृधः एतयोस्तृतीयमक्षरं कृष्यते अन्यत्र चतुर्थम् । वर्तेचेत्यादिसूत्रद्वयं प्रकृशब्दराहितं आम्नायानुसारेण व्याख्यातमिदं पुस्तकान्तरे तद्यथा वर्ते च *मराय आंधानन्दे अनुपादं* मराये आंधा च नन्दा च आंधानन्दे ते अनुपादं भवतः पादे पादे अनुपादम् । आग्नीं ना३हास्ता३च्युतां३ एवमादिषु । *नंदायाः स्थानेमागायतापरिदुहाशकुपुरः सखातंदुदक्षादिषु च* मराय एव नन्दायाः स्थाने मागायता परिदहाशकुपुरः सखा भवति वक्ष्यमाणेषूदाहरणेषु । परिधी३दुहानः शकुनाः पुरोजिती सखायः । तंदुरोषां दक्षाय्यः प्रेद्धोपुरो त्वाशश्वन्तः । *नन्दापरमेकोच्चम्* नन्दापरं यत्पूर्वं तदेकोच्चं भवति । ता३मा अग्निमा३स्तेवसवः एवं सर्वत्र । *दून्युच्चमिंद्र* पिबासोममिन्देत्यत्र नन्दात्परं दून्युच्चं भवति । *नावेकं नीचम्* योनौ अग्निनरायां एकं नीचं भवति नन्दापरं । *मासु सक्षं च* म-

ऽमासुसक्षंच रांत२ँहिमनाकारान्त२ँ स्तंव्युचैकेस्तं व्युश्चैके ॥ ४ ॥

अथस्तोभगतागतमगति स्तोभस्य स्वरे प्रत्यये सन्धौ गतिर्विरतेक्व चिद्विरतेप्यगति र्व्यंजने प्रत्यये गतिरगतिश्च तत्र स्वरव्यंजनयोः प्रत्यययोरगतिमंतः

---

असु सक्षं एतेषु नन्दापरमेकं नीचं भवति । बोधासुमेम नसुष्टुतिमसु । इमाब्रह्मासमु मति चक्षं धीयतिदुहानोधेच । अत्र-नितवाह२ँ सोमरारण एवमादीनि । एषावाकास्थितानिचैतानि अकारान्तपदान्तां स्थिरान्तं *रांत२ँहितं* स्वरान्तं यत्पूर्वास्थितं स२ँहितं भवाति । स्थितसंहितं भवतीत्यर्थः । परिधींरति ता२ँ इहि दुहानोबभ्रऊधनि । *अनाकारान्तं* पदान्तावस्थितमेव यत्पर्व आकारान्तं भवति । तत्रास्थितस२ँहितं न भवति स्थितसन्धिर्नभवतीत्यर्थः । तवाहं नक्तमुतसोमतेदिवा सोमंविश्वाच्याधिया पिबासोममिन्द्र मन्दतुत्वा । नार्वा एवमादीनि । *स्तं व्युचैके स्तं व्युचैके* एतौ शब्दौ स्थितस२ँहितौ भवतः एके मन्यन्ते न तु ग्रन्थकारः । एतानि निश्चितानि प्रयोगविषयाणि न स्वाध्याये ।

इति उपाध्यायाऽजातशत्रुकृते पुष्पसूत्रभाष्ये प्रथमस्य चतुर्थी कण्डिका समाप्ता ॥ * ॥

वृद्धावृद्धं समाप्तम् *अथ स्तोभगतागतं* वक्ष्यते । *अगति स्तोभस्य स्वरे प्रत्यये सन्धौ* यथा हारायणे राजादेवौहो२ ऋतंबृहाव । तथा चार्कजंभे हाउत्सोदेवोहिरण्या२पा२एवमादीनि । *गतिर्विरते *विरते तु गतिर्भवति हारायणादिषु । *क्वचिद्विरतेऽप्यगतिः *यथा मधुश्च्युन्निधने प्रागन्त्यात्स्तोभा-

स्तोभा ये तान्वक्ष्यामः कण्वबृहत्पाद्यान्त्यावगतौ पूर्व-कल्पश्चोदिन्द्रेत्यन्त्यत्वा दत्रेकाराभ्यासस्य विकल्पोन-गतागतस्य मध्यमयोश्चागतः सत्वन्नउद्वा वृषस्वपुनान-द्वितीयायान्धर्हिंप्रत्ययेयंपूषायां२सर्वासु पूर्वेजनित्रेन्त्य-स्य स्तोभस्यागतिर्यस्य द्वितेत्यत्रान्त्यस्यापि गति र्वाम्रे-हो इस्तोभस्योत्तरस्या गतिरभिसोमाद्यायामाद्यःस्तो-भः सगतिप्राप्तोलुप्तगतिर्भवतिक्रौञ्चयोः पर्याकूपारे चागतः स्तोभः पुरोजितीत्यस्मिन्नृच्छन्दे गतिर्भवति

---

व । *व्यञ्जने प्रत्यये गतिरगतिश्च* यथा वाजाजिति । *तत्र स्वरव्यंजनयोः प्रत्यययोरगतिमंतः स्तोभा ये तान्वक्ष्यामः* उपरिष्टादुदाहरिष्यामः । *कण्वबृहत्पाद्यान्त्यावगतौ* कण्व-बृहतिस्तोत्रीयाद्यान्त्यावगतौ स्तोभौ भवतः त्वामिद्ध्यादिषु । *पूर्वकल्पश्चोदिन्द्रेत्यन्त्यत्वात्* उदिन्द्राश्वमिष्टय इत्यत्र पूर्व-कल्पश्चागतोभवति । अन्त्यत्वाद्वैकल्पिकत्वादेतयोः । *अत्रे-काराभ्यासस्य विकल्पो न गतागतस्य* अत्र इकाराभ्या-सो विकल्पते न गतागतं । *मध्यमयोश्चागतः सत्वंन उद्वावृषस्व पुनानद्वितीयायां धर्हिंप्रत्ययेऽयंपूषायां२सर्वासु* स्तोत्रीयाया मध्यमश्चागतोभवति सत्वंनादिषु । पुनाना-द्वितीयां धर्हिंप्रत्यये अयं पूषायां२ सर्वासु *पूर्वे जनि-त्रेऽन्त्यस्य स्तोभस्यागतिर्यस्य द्वितेत्यत्रांत्यस्यापि गतिर्वाम्रेहो इस्तोभस्योत्तरस्यागतिरभिसोमाद्यायामाद्यः स्तोभः स गति प्रा-प्तो लुप्तगतिर्भवति क्रौंचयोः पर्याकूपारे चागतः स्तोभः* क्रौं-चयोरयंपूषाद्ययोः परिसहर्यतं२हरिमिति यस्य योनिस्तस्मिन्ना-कूपारो एतेषु सर्वे स्तोभा अगता भवन्ति । *पुरोजितीत्यस्मि-

गतिमान्पूर्वस्तोभः सौभरे सनोयुवातवत्यदिन्द्रिया-याः सर्वासु तंवोदस्माद्यायां वोत्तरस्त्वगतिमान् भद्राइन्द्रस्यमदत्यनुमादेवत्राहव्यं प्रेमध्वराय ॥ ९ ॥

अतः परमगतिमन्तस्तोभा ये तान्वक्ष्यामोऽव्यंजने प्रत्यये स्वरे तु गतिर्भवति शाक्त्ये प्रथमायाःसर्वउत्त-रयोश्चक्रुमासत्यत्वःहिरण्ययुश्च कक्षे सर्वनेंद्रःसुत इ-न्द्रङ्गीर्भिराद्यागमान्नियमते घृतनिधनेऽन्त्यः सर्वासु मधुनिधनेंत्यवर्ज्जं दैवोदाच्चारयो यौक्तयोः स्वधाप्रत्यये माधुछन्दसउपस्वरन्त्वयाभूषन्ति सुषावसोपुनाना-

छन्दे गतिर्भवति* एवं तेष्वेव क्रौञ्चादिषु त्रिषु पुरोजितीत्यत्र गतिः । *गतिमान्पूर्वः स्तोभः सौभरे सनोयुवातवत्यदिन्द्रिया-याःसर्वासु तंवोदस्माद्यायां च* पूर्वस्तोभोगतिमान् भवत्ये-तेषु । *उत्तरस्त्वगतिमान् भद्राइन्द्रस्य मदत्यनुमादेवत्राहव्यं प्रेमध्वराय* एतेषु उत्तरो ऽगतिमान् भवति ।

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये प्रथमस्य पञ्चमी कण्डिका समाप्ता ॥

*अतः परमगतिमन्तः स्तोभा ये तान्वक्ष्यामोऽव्यञ्जने प्र-त्यये स्वरे गतिर्भवति* स्वरे तु प्रत्ययो गतिर्भवति । उदाहरणानि यथावृषाहो३२ अचा इहो३ई । *शाक्त्ये प्रथमायाःसर्व उत्तरयोश्चक्रुमासत्यत्वःहिरण्ययुश्च* उदाह-रणानि यथा राजान्निति वृषो ऽऽहो३२ । अवाऽयिहो-यि२ । गतौ । *अकक्षे सर्वे* अगता भवन्ति । *नेन्द्रःसुत इन्द्रं-गीर्भि राद्यागमान्नियमते* एतेषु गतिर्भवति । हरि श्रीनिधने सर्वा गतिर्भवन्ति । *घृतनिधनेंत्यः सर्वासु मधुनिधनेऽत्यवर्ज्जं

स्साक्षुष्टम्भे स्वादिष्ठाद्ययोरंत्यो मद्गोप्रत्नं गौतमेंत्यो वैष्टंभे वयमन्त्यः सर्वासु कण्वेभिः प्रत्नं२ सधस्तोत्रीयान्तेनजातमविश्वाशविस्तोत्रीयान्ते यदिन्द्रयानपापत्वा देवान् गच्छेन्दुरिन्द्राय विश्वस्येशासहस्रधावाचः साम्न्यासोप्रियंदेवायाविकोशं२ हारिवर्ण उलोककमन्दानास्तैरश्वेप्रत्नामृतस्या ऽभीशवे पुरूणि गृणा श्रीणन्तः समुद्रस्य पुना-

---

दैवोदाक्षारयोर्यौक्तयोः स्वधामत्यये माधुछन्दस उपस्वरं त्वया भूषन्ति सुषावसो पुनानाः सोक्षुष्टं भे स्वादिष्ठाद्ययोरन्त्योमद्गोप्रत्नं गौतमें ऽत्योवैष्टम्भे वयमन्त्यः सर्वासु कण्वेभिः प्रत्नं२सधस्तोत्रीयान्ते न जामतविश्वाशवि स्तोत्रीयान्ते यदिन्द्रया नपायत्वा देवानूगच्छेन्दुरिन्द्राय विश्वस्येशा सहस्रधा वाचः साम्न्यासोप्रियन्देवाय त्रिकोशँहारिवर्णउलोककमन्दानस्तैरश्वे प्रात्नमृतस्याभीशवे पुरूणिगृणा श्रीणन्तः समुद्रस्य पुनानायामाद्यः सर्वासु स्वः पृष्ठे सर्वे नाभिसोमाध्यास्यायां विचे मत्यये पृश्निनि ज्येष्ठं य इन्द्रं तं२शुहस्तेनसुषादश्वः सुघृणामत्तं पुरूतीषादीये सर्वे रन्ध्रयोश्च सर्वे नोत्तरे वृषाअचि वाजजिति सर्वेनरयिमचिक्र वरुणसाम्नि नर्योप्सु मदाधरुणं वन्तीय इन्द्रे सन्तु दे दिवातीरनाधृष्टाभिर्मधुपर्षि पृथुप्रगामोर्ज्जोनभुवद्वादक्षंदधानुद्दिवमौमध्यआविस्तुर्गोयतो व्रतानिहिन्वंनृताभक्तयत्सोयोजतउदुस्रिया अर्वाग्रथं२सजूरश्वायन्तोनागोरयि मांशर्द्धपरिष्क्रृण्वन्ति गूर्दः पूर्वयो हुम्माहिन्वाविशीयोत्तरयोरन्स्योयोनौ चान्त्यः॥ ॥ ॥

इति पुष्पसूत्रभाष्ये प्रथमस्य षष्ठी कण्डिका समाप्ता ।

नायामाद्यः सर्वासु स्वःपृष्ठे सर्वेनाभिसोमाध्यास्यायां विचेप्रत्यये पृश्निनिज्येष्ठं य इन्द्रंते॑शुहस्तेनसुषादध्वः सुघृणाप्रत्तंपुरूण्यातीषादीयेसर्वे रन्ध्रयोश्च सर्वे नोत्तरे वृषा अचिवाजाजिति सर्वेनरायिमाचिक्रवरुणसाम्नि नर्योप्सुमदाधरुणं वन्तीय इन्द्रेसंतु देदिशतीरनाघृष्टाभिर्मधुपर्षिपृथुप्रगामोर्जोनभुवद्वादक्षंदधानुष्टिमौमध्य आविष्णुर्गोयतो व्रतानिहिन्वंनृताभक्तं यत्सोयोजतउदुस्त्रियाअर्वाग्रथ॑सजूरश्वारन्तोनागोरायिर्माशर्द्धपरिष्कृण्वंति गूर्द्दःपूर्वयोर्हुमाहिन्वविशीयोत्तरयोरन्त्योयोनौ चान्त्यः ॥ ६ ॥

दक्षणिधने गोषातिरिन्द्राय द्रोणे कार्त्तयशे सर्वे न तु विवसोः स्यामसुम्ने साकमश्व उच्चायामाद्यः सर्वास्वन्यत्र प्रथमतृतीयपञ्चमा नमधोस्तृतीयो लम्बेसोममिन्द्राय शुक्रन्दुदुहे हरायणेन्द्रं पवमान्यस्य॰ वरुणासामदिरोर्जुनो वैयश्वेपुनानायामंत्योभासेक्रतुवित्तेनापवस्वमं॑हिष्ठः सितेऽन्त्यः कौत्सेभितृतीया-

---

*दक्षणिधने गोषातिरिन्द्राय द्रोणे कार्त्तयशे सर्वे* स्तोभा अगता भवन्ति । *न तु विवसोः स्याम सुम्ने* तुविद्युम्नेवसोः स्यामसुम्ने इत्यपवादः । *साकमश्व उच्चायामाद्यः सर्वास्वन्यत्र प्रथमतृतीयपञ्चमाः* । उच्चाया अन्यत्र प्रथमादयः स्तोभा अगता भवन्ति *न मधोस्तृतीयो लम्बे सोममिन्द्राय शुक्रं दुदुहेहारायणेन्द्रं पवमानस्य वरुणासामदिरोर्ज्जुनो वैयश्वे पुनानायामन्त्योभासे क्रतुवित्तेनापवस्व मं॑हिष्ठः सितेन्त्यः* गायत्रीसामासिते अन्त्यः स्तोभोऽगतोभवति *कौत्सेऽभितृती-

यामुभौ स्तोभाविन्द्राय पूषाद्ययोः स्वादिप्रथमायाश्चो-त्तरस्तꣳसखायः परित्यꣳरक्षः सैंधुक्षिते तिस्रो-वाचोत्तमायामंत्यः पवस्वाद्यायाश्च मतेप्रत्नंपवमान-गोभिः सुषादꣳधोदुहानो दावसुनिधनेत्वꣳसोमान्त्यः सर्वासु मदेषु गोषातिर्हाविष्कृते त्वꣳसोमाद्यान्त्ययोः स्वादिप्रथमायाश्चोद्वꣳशीय इन्द्रसुतायामुत्तरयोर्मैधे-त्थाप्रत्यये ॥ ७ ॥

सामराजेपवित्रेयामनाक्रुष्टो गौषूक्तेर्य आमरुतां धेनौ सर्वे त्वाष्ट्रीसाम्नोश्च सर्वे न हरिवत्सपवमानवा-

यायामुभौ स्तौभाविन्द्रायपूषाद्ययोः स्वादिप्रथमायां चोत्तरस्त-ꣳसखायः परित्यꣳरक्षः सैन्धुक्षिते तिस्रोवाचोत्तमायामन्त्यः प-वस्वाद्यायां च मन्तेप्रत्नं पवमानगोभिः सुषादꣳधादुहानोदाव-सुनिधने त्वꣳसोमान्त्यः सर्वासु मदेषु गोषातिर्हाविष्कृते त्व-ꣳसोमाद्यान्त्ययोः स्वादिप्रथमायां चोद्वꣳशीय इन्द्रसुतायामुत्त-रयोर्मैधेत्थाप्रत्यये* ।

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये प्रथमस्य सप्तमी कण्डिका समाप्ता ।

---

सामराजे पवित्रायामनाकृष्टौगौषूक्तेर्य आमरुतां धेनौ स-र्वे त्वाष्ट्रीसाम्नोश्च सर्वे* स्वरयोस्त्वरयोस्त्वाष्ट्रीसाम्नोः सर्वे स्तोभा अगता भवन्ति । नहरिवत्सम्पवमानमेवमादिष्वपवादः ।

*न हरिवत्सं पवमानवाचस्पतिः सोमस्यातिः सखेन्द्रस्य पुरः सखयोर्वाचीनं यज्ञं च ब्रह्मोद्वꣳशं युक्ष्वाह्यथागिरां बृहदाग्नेयें-

चस्पतिः सोमस्यतिः सखेन्द्रस्य पुरः सखायोर्वाचीनं यज्ञं च ब्रह्मोदृवंःशंयुंक्ष्वाह्यथागिरां बृहदाग्नेयेन्त्यो यस्तेसोमसाम्नि गोषातिरुत्तरे जनित्रे पुरउत्तरयो- रंत्यः स्वर्वन्निधन इन्द्राय सशुक्रइन्द्रेस्तेसुतस्येन्द्रस्य- यशस्यनुत्तो वैश्वामित्रेसरज्जार आनिधने तु प्रत्यये पूर्वयोश्चाभिगीते प्रत्यय उद्धत्प्राजापत्ये सर्वे न नृभिः शैखण्डिने सर्वे नयेत्त्वायदीपविनशीपतिः क्रन्देशूर- इन्द्रस्या उवाभीके सर्वत्र न सुता इन्द्रायाछिद्रांजो- रूपं सन्तनिपार्श्वानामा उवा सर्वत्र न तालव्याद्या- त्परमतिहारमेके विरते गतिलोपो न सन्धौ तूः३त्वाह- रा ३३१ उवा ३२३ इणी ३२३४ यातू३ त्वाहरा ३३१

---

ऽन्त्योयस्ते सोमसाम्नि गोषातिरुत्तरे जनित्रे पुरउत्तरयोरन्त्यः स्वर्वन्निधन इन्द्रायसशुक्रइन्द्रस्तेसुतस्येंद्रस्य यशस्यनुत्तोवैश्वामित्रे सरज्जार आनिधने तुप्रत्यये पूर्वयोश्चाभिगीते प्रत्यय उद्धत्प्रा- जापत्ये सर्वे ननृभिः शैखण्डिने सर्वे नयेत्त्वायदीपविनशी- पतिः क्रन्दे शूरइन्द्रस्या ऊवाभीके सर्वत्र न सुता इन्द्रायाछि- द्रांजोरूपसन्तनिपार्श्वानामा उवा सर्वत्र न तालव्यात्* । ता- लव्यात्परं आउवा गतिरेव भवति । अछिद्रादिष्वेव मनीषि- ण इयत्र । *व्यात्परमतिहारमेके विरते गतिलोपौ न सं- धौ तूः३त्वा३हरा ३३१ उवा ३२३ इणी ३२३४ यातू ३ त्वा- हरा ३३ उवा ३२३णी ३२३४ या३* तालव्यात्परं गते- रतिहारमेके मन्यन्ते । तत्र च विरते गतिलोपः सन्धावलोपः तत्रोदाहरणं तमेवअछिद्रादिष्वेवोदाहरणानि मनीषिण इति ।

उवा ३२३ णी ३२३४ या कृतिनिपरीतोत्तरयोः आयन्तः सर्वासु वत्सासु सप्तास्येभिर्ज्याका: पवस्वाद्ययोराजुह्वानस्यातीषङ्गे पवस्वाद्ययोः सिमासु च छान्दसीष्वाद्यायां यस्तेहरे संयोगे प्रत्यये वृष्टि सर्वेनवशि प्रत्यये नवाशि प्रत्यये ॥ ८ ॥

वादौमन्तेनीचैः पुना प्रत्नं मृज्य सुषा पाहि परिधीं दुहे मं॰शके थे पुनानायां प्रान्त्ययोः छुम्भे वयं प्रत्नं॰राय आ सुता दं॰ष्ट्रेचानिन्द्रं तवात्वारंपर्वा

---

*कृतिनिपरीतोत्तरयोः आयन्तः सर्वासु वत्सासु सप्तास्येभिर्ज्याका: पवस्वाद्ययोराजुह्वानस्यातीषङ्गे पवस्वाद्ययोः सिमासु च छान्दसीष्वाद्यायां यस्तेहरे संयोगे प्रत्यये वृष्णिसर्वे न वशिप्रत्यये न वशिप्रत्यये* ।

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये प्रथमस्य अष्टमी कण्डिका समाप्ता ।

---

गतागतं समाप्तम् । *वादौ मन्ते नीचैः पुनाप्रत्नंमृज्यसुषापाहि परिधीन्दुहेमं॰शके* समन्ते प्रस्तावादि नीचो भवति । पुनानः सोमप्रत्नं॰मधमृज्यमानः सुषावसोपाहिविश्वस्माद्रक्षसः परिधीं॰रतिदुहानः । इमं॰स्तोमंप्रशकेमत्वा । *थे पुनानायां प्रान्त्ययोः* । उद्गीथे पुनानायां प्रथमांत्ययोः स्तोत्री ययोः समन्ते नीचीभवतः प्रसङ्गादेतदुक्तं । *छुंभे वयंप्रत्नं॰रायआसुता*। महावैष्टुंभे वयं प्रत्नं॰मघरायाआक्रूहसुतासोम एतेषु प्रस्तावादिर्नीचैः । *दं॰ष्ट्रे च *दं॰ष्टे चेतिजातिग्रहणम् *आदंष्ट्रं॰ष्ट्रयोः*

प्रान्त्ययोः शीयेविꣳपयुंक्ष्व क्षितेशुभ्रꣳरायः सꣳ हिष्टी-
यासितयोरय मपाहरिश्री लीयेयाभि सुतादिवः पी
विघ्राकू शुद्धीयेभिद्रेगिरिं पुरोजिप्र त्वाष्ट्रयोश्च सुता-
च प्रान्त्ययो राग्नेये पुरोज्यग्नि माशु नाध्वतवप्रसो-

---

प्रस्तावादिनीचो भवति एष उत्सर्गः । *अनिन्द्रन्तवात्वारंप-
र्यांप्रांत्ययोः* अन प्रतिषेधे इन्द्रंविश्वा तवाहꣳसो आत्वाविशंतु-
अरन्तइन्द्रकुक्षये परीतोष्यां प्रथमांत्ययोः एतेषुप्रतिषेधः ।
*शीयेविꣳपयुंक्ष्व* उद्वꣳशीये विꣳपयुंक्षाहिक्रोशिनाप्रस्तावादि-
नीचैः । *क्षितेशुभ्रꣳरायः सं* सैन्धुक्षिते शुभ्रमंधोरायःसमुद्रेति
च नीचैर्भवति । *हिष्टीयासितयोरयम्* यद्वाहिष्टीयासितयो-
रयंपूषेति नीचीभावः । *अयाहरिश्री* हरिश्रीनिधने अया-
चित्त इति च नीचैः *लीये याभिसुतादिवः पी* रोहितकू-
लीये अयाचित्तः अभिद्रोणानि सुता इन्द्राय दिवः पीपूषं एते-
षु प्रस्तावादिं नीची भवति । *विघ्रा कू* राज्याकूपारे वि-
घ्राहित्वेति प्रस्तावादिनीचोभवति । *शुद्धीयेभिद्रेगिरिपुरोजि-
प्र* शुद्धाशुद्धीयेऽभीतोवाजसातमामिति द्वे आद्ये स्तोत्रीये गि-
रिंनपुरुपुरोजितीप्रथमायां च प्रस्तावादिनीचैः । *त्वाष्ट्रयोश्च*
ऊर्द्धेडत्वाष्ट्रीसाम्नि आकारणिधने च पुरोजिप्रथमायां च प्र-
स्तावादि नीचैः । *सुता च प्रान्त्ययोः* सुतासोमायां प्रथमा-
न्त्ययोःस्तोत्रीययोरूर्द्धेडत्वाष्ट्रीसाम्नि प्रस्तावादि नीचं । *आ-
ग्नेये पुरोज्यग्नि* बृहदाग्नेये पुरोजि अग्निनर इति च नीचीभ-
वति । *आशु* आशुभार्गवे च उच्चातादिषु प्रस्तावादि नी-
चं । *नाध्वतवप्रसोसनः* नः प्रतिषेधे । अध्वर्योतवत्यइन्दोप्र-

सनः पर्णेचाप्रसो पूक्ते शुभ्रमुचैनाया दक्षसंहि-
तयोः स्वादिमान्त्ये स्ऽह्यदाभ्यस्तिस्रश्च षडन्ते तृ-
चयोर्द्वे पुनाच सेधे पुना परितवामंतवत् प्रत्नं प्रपिबा-
भिसोद्वेश्रीसदूमनेयं दासेचा ऽऽसितेपघ्नं स्तुचे म-

---

सोमासोविसनइन्द्राय एनेष्वपवादः । *पर्णेच* विलम्बसौप-
र्णे च आशुभार्गवत् उत्सर्गापवादौ द्रष्टव्यौ एतान्येव प्रत्युदाह-
रणानि । *अप्रसो* प्रसोमासोविपश्चित इत्यस्यापवादः । *पू-
क्ते शुभ्रमुचैनाया* गौषूक्ते शुभ्र मन्धे उच्चातेपुरानावि-
श्वाअयाचित्त इति नीचीभावः । *दक्षसंहितयोः स्वादिमांसे*
दक्षणिधनसंहितयोः स्वादिष्ठयेतिमध्यमान्ते स्तोत्रीये नीचे
प्रस्तावे भवतः । *सऽह्यदाभ्यस्तिस्रश्च* संहिते विशेषः ।
अदाभ्यः पुरः तिस्रोवाच उदीरत इति च तृचयोर्मध्यमां-
स्स्तोत्रीये नीचप्रस्तावे । *षडन्ते तृचयोर्द्वे* वषट्कारणि-
धने अभित्वापूर्वपीतयेविधुन्दद्राणमिति च तृचयोर्द्वे आद्ये स्तो-
त्रीये नीचप्रस्तावे भवतः । *पुनाच* पुनानः सोमायां
वषडन्ते प्रस्तावादि नीचैः । *सेधेपुनापरितवामन्तवत्* उ-
त्सेधे पुनानः सौपरीतोषिं च तत्राहंसोत्रिष्वेतेषु समन्तवत्
प्रस्तावादिनीचीभावः । *प्रत्नंपिबाभिसोद्वेश्री* उत्सेधे
प्रत्नंपिपूषं प्रथमायां पिबासुतस्य अभिसोमासे इति च तृचयो-
र्द्वेद्वे आद्ये स्तोत्रीये श्रीणन्तइति च नीचीभावः । *सद्मनेयं*
ऊर्द्धसद्मने अयं त इति नीचीभावः । *दासेच* रात्रिदै-
वोसे चायन्तइन्द्र इति नीचीभावः । *आसितेपघ्नन्* गायत्रीसा-
मासिते अपघ्नन्पवसे इति नीचैः । *स्तुचेमन्द्र* यौक्तस्तुचेम-

न्द्रमन्तवदुक्थे प्रहिन्वोच्चैः शंकुन्यस्यप्येषसर्वः स्वयवा-
श्वे पनकाण्वे श्यैतेद्वेयोनाविन्द्र क्रत्वायां च परम-
ज्याः स्वादोर्वावृपुरोजीमा उत्वेति सर्वः पुरोजिगि-
रिज्ञनित्र आर्षभश्येनयोः प्रान्त्येवायोर्द्धर्त्तीति वाभ्रेभि-
सोद्वे मान्यत्र लौशेगोविच्छयेनवदसाविमान्त्ये ऽस्यपी-
त्वाकाशीते नवेमन्द्राभिमत्ससुषा मद्वेचा नुत्सोराजा

---

न्द्रयायेतिनीचैः। *मन्तवदुदुच्छे* बार्हदुक्थेपुनानःसोपरीतोषि
चतवाह सोतृचेषुसमन्तवदुच्चनीचं।*प्रहिन्वोच्चैः* प्रहिन्वान इति
बार्हदुक्थेप्रस्तावादिरुच्चैः। *शंकुन्यस्यप्येषसर्वः* शंकुनि अस्य-
पीत्वाएषस्यधारयेतिसर्वस्तृचोनीचप्रस्तावादिः *स्वयवाश्वे* श्या-
वाश्वे स्वेद्विर्यं पञ्चतिस्वयशब्दोमन्द्रेनीचो भवति। *पनकाण्वे*
काण्वेपनशब्दोनीचोभवतिमन्द्रस्वरे। *श्यैतेद्वेयोनाविन्द्रक्रत्वायांच
परमज्याः स्वादोर्वावृपुरोजीमा उत्वेति सर्वः* श्यैतेयोनाविन्द्र-
क्रत्वायाञ्च द्वेद्वे आद्ये स्तोत्रीये परमज्याः स्वादोरिच्छेतिप्रथमावा-
वृधानः पुरोजिप्रथमाइमाउत्वेतिसर्वस्तृचः एतेषु प्रस्तावादिनी-
चैः। *पुरोजिगिरिजनित्रे* उत्तरेजनित्रे प्रपुरोजितीगिरिनपु-
रुनीचप्रस्तावादिः।*आर्षभश्येनयोः प्रान्त्ये* आर्षभे गोविच्छये-
ने च प्रथमांत्ये स्तोत्रीये नीचेप्रस्तावे भवतः। *वायोर्द्धर्त्तीति*
वायोरभिक्रंदेधर्त्तीतिनीचैः। *वाभ्रेभिसोद्वे*। वाभ्रे अभिसोमाद्वे
स्तोत्रीये नीचप्रस्तावे भवतः। *मान्यत्र* अन्यत्र मध्यमा नीचप्र-
स्तावा। *लौशेगोविच्छयेनवत* द्वभ्याघातलौशेगोविच्छयेनवत्-
प्रथमान्त्ययोः। *असाविमान्त्ये* असाविसोमापालोशे मध्य-
मान्त्ये नीचप्रस्तावादिः। *अस्यपीत्वाकाशीते* अस्यपी-
त्वेतिनीचैः *नवेमन्द्राभिमत्ससुषा* उत्तरे मानवे मन्द्रया या अ-

रन्ध्रोत्तरवाजजितोर्योना वेतং्हवद्देव्ये पुरोनदे पुना-यामे पुरोयज्ञावृत्रवीरापारे ष्ठ प्रयोनावयं पूपुरः क्रौञ्चे साप्तमिक आयास्ये नुत्सस्तव कावंरथन्तयोः सर्व-त्रा प्रोस्वो ॥ ९ ॥

थेषूक्ते द्वे साव्यामपो वैयश्वेजय उतोनः शवे नेन्द्रः कलेषां प्रान्त्ययो राकूहविषघृतनिधनाश्वसाध्यानां द्वे

---

भिसोमामवसरासः सुषावसो इति नीचैः । मद्रेच पौरुमद्रेच एता-न्येवोदाहरणानि । अनुवसोराजा अनू उत्सोराजादेव इति चात्रापवादः *रन्ध्रोत्तरवाजजितोर्योनौ* उत्तरे ऋक्तो रन्ध्रेवा-जजिति च योनावेव प्रस्तावादिनीचौः । *एतং्हवद्देव्ये* इहव-द्वामदेव्येएतमुत्यमिति नीचैः *पुरोनदे* नानदे पुरोजितीनीचैः* पुनायामे* उत्तरेयामे पुनर्नो अक्रमीदभीनीचैः *पुरोयज्ञावृत्रवी-रापारे* पर्याकूपारेपरोजितीयज्ञायसवृत्रघ्ने वीराय सदना इति एतेषु नीचैः प्रस्तावादिः *ष्ठ प्रयोनौ* वयमेनवासिष्ठयोनावेव प्रथमायां नीचीभावः । *अयं पूपुरः क्रौंचे* अयं पूषा पुराजिंती-तिनीचैः । साप्तमिक आयास्ये सर्वप्रस्तावादिनीचैः *अनुत्सस्तव* अनूप्रतिषेधं उत्सस्तवाहं सोमेति च प्रतिषिध्यते *कावरथन्तरयोः सर्वत्र* कावेरथन्तरे च सर्वत्र प्रस्तावादिनीचैः । अप्रोस्वो प्रो अयासीदिति कावेस्त्रोवारथन्तरे प्रतिषेधः । प्रस्तावाधि-कारः समाप्तः ।

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये प्रथमस्य
नवमी कण्डिका समाप्ता ।

---

थेषूक्ते द्वे साव्यम् अतः परं उद्गीथाधिकारः । उद्गीथे असा-

सद्मनेयं दासे च कौल्मलान्धीकावाभीकसोमर्षभमरुतां योनौ प्र मरुतां चत्वारीन्द्रमलीये प्र वाहे स्तृणन्ति देवमपां न ककुभे त्वꣳ सर्वं उग्रं कदानत्वद्ग्रहणात् सेरयिमिन्द्रासर्वोभियो भरे स्थूरमेवासर्वो योनौ प्र-

---

शुर्मदापामाद्ययोरुद्गीथस्तोत्रीययोरुद्गीथादि नीचैः। *अपौवैयश्वे*। वैयश्वे अपोवसानोनीचैः । *जयउतोनः* । संजये उतोनउत्पुपूर्या इति नीचैः । अतः परं सर्वत्रोद्गीथाधिकारोऽनुवर्त्तनीयः । *शत्रै*। शैशवे उद्गीथादि नीचैः। *नेन्द्र*। सन इन्द्रः इन्द्रश्चसोमः । *कलेर्षामात्यन्योः* । शाकले अर्षा सोमायां प्रथमांत्ययोः स्तोत्रीययोरुद्गीथादि नीचैर्भवति । *आकूहविषघृतनिधनाश्वसाध्यानां द्वे । *आकू पारे सौहविषघृतनिधन आश्वे साध्यानां द्वेद्वे आद्ये नीचोद्गीथे भवतः । *सद्मनेयं* । अर्द्धसद्मने अयंरणायते सुन इति नीचैः। *दासे च* रात्रिदैवोदासे च पूर्वशब्दोनीचैः । *कौल्मलांधीकावाभीकसोमषभमरुतां योनौ प्र* कौल्मलं बर्हिष आंधीगवे कावे आभीके यस्ते सोमसाम्नि ऋषभे पावमाने मरुतांधेनौ एतेषां योनावेव प्रथमायां उद्गीथादि नीचैः । ऊहगीतौ प्रतिषिध्यते । *मरुतां च चत्वारि* मरुतां धेनौ च चत्वार्यन्या अनुद्गीथादिरपि वचनान्नीचैः *इन्द्रमलीये प्र* इन्द्रमच्छरोहितकूलीगे प्रथमायामेवोद्गीथादि नीचैः। *वाहे स्तृणन्ति देव मपां न*। ऐध्मवाहे स्तृणन्ति बर्हिः देवं देवत्रा अपां न पातमिति नीचैः *ककुभेत्वꣳसर्वः* । त्रैककुभे त्वमङ्गप्रशꣳसिष इति सर्वमेवोद्गीथादिनीचैः। *उग्रंकदानत्वद्ग्रहणात्* । उग्रन्तत्यत्येतेकदानः शुश्रवनत्वदन्यो एतेषां ग्रहणान्नीचीभावः । *सेरयिमिन्द्रासर्वो-

रे च वृजिगेप्र पर्णे सोमवरुणा स्वारे योनावाद्ययो-र्मरुद्देवानामूतीदिविद्युम्ना मित्रे दिविद्युम्ना स्यद्वे पृश्निन्येकर्चे पुनानायामन्तवत् पर्यामैतयोर्दैर्घे चैवमभिसोम योनौ मान्त्ये यज्ञासर्वः क्षितेचामदाय कण्व

---

भियो॥। एडकौत्से रयिमर्ष इन्द्राय सोमपातव इति सर्वस्तृचः अभियोनिमिति च नीचीभावः। ॥भरे स्थूरमेवासर्वः॥। सौभरे स्थूरं न कचित् वाह्यसित्रीरयूरिति एतेषूद्‌गीथादिनीचैः। ॥योनौ भरे च॥। सौभरे योनौ प्रथमायां उद्‌गीथादौ प्रतिहारे च नीचत्वं। ॥वृजिगे प्र॥ आजिगेवृषा च प्रथमायां उद्‌गीथादिनीचैः। ॥पर्णे॥ विलम्बे सौपर्णे उद्‌गीथादिनीचैः। उच्चादिषु। असोमवरुणासोमं पवित्रे वरुणायेति चापवादः। ॥स्वारे योनावाद्ययोर्मरुद्देवानामूतीदिविद्युम्ना॥। ॥स्वारे सौपर्णे नावाद्ययोः मरुत्वते च देवानां सुम्ने। ऊती दिसदादिविसद्‌भूमिद्युम्नानिमान् एतेषूद्गीथादि नीचैः। ॥मित्रे दिविद्युम्नास्यद्वे॥सौमित्रे दिविसद्‌भूमिद्युम्नानिमान् अस्य प्रत्नेति द्वैस्तोत्रीये नीचादयः। ॥पृश्निन्येकर्चे॥। पृश्निनि एकर्चे दुहानायां एतत्राहाऽस्सोमेति च नीचैः। ॥पुनानायामन्तवत॥। उद्गीथादेर्नीचीभावः। ॥पर्याम॥। परीतोष्यां पृश्निनि मध्यमायां उद्‌गीथादिनीचैः। ॥एतयोर्दैर्घे चैवं॥। दैर्घश्रवसे च एतयोः पुनापरीतोषितृचयोरेवमेव पृश्निवदुद्‌गीथादिर्नीचीभावः। ॥अभिसोम॥। अभिसोमायां दैर्घश्रवसे योनौ मध्यमायां उद्‌गीथादेर्नीचीभावः ॥योनौ मान्त्ये॥। दैर्घश्रवसे योनौ मध्यमान्त्ये स्तोत्रीये नीचोद्‌गीथे भवतः। ॥यज्ञा सर्वः॥। यज्ञायज्ञेति तृचे दैर्घश्रवसे सर्वं उद्‌गीथादि नीचैः। ॥क्षिते च॥। सैन्धुक्षिते च उद्‌गीथादेर्नीचैः। ॥अमदाय॥। अ-

बृहत्युपोत्तमश्चावृद्धाद्यपादाद्य२ँरहस्ये च बृहत्य त्रिष्टु-
बातिछन्दसोः साहीयेऽग्नेत्व२ँसर्वो विच्छन्दःसु च व-
त्सासु योनौ च प्र शनवार्शयोरनूनेऽस्मद्ग्रहणा द्वर्णेच
न सोम ज्ञीयर्क्षु विशीये प्र क्रोशौपगवोत्तरवैष्णवैक-

---

साम्य२ँशुर्मदायेति प्रतिषेधः । *कण्वबृहत्युपोत्तमं* सर्वं उद्गी-
थादिनीचं भवति । च शब्दादुद्गीथे । अवृद्धादिकिं ? एतदेव
अपदादित्वं चावृद्धादि यदि भवति तदाप्युद्गीथे नीची भ-
वति । *रहस्ये च बृहति* । रहस्यविषये, उद्गीथादिनीचैः ।
*अत्रिष्टुबतिछन्दसोः* त्रिष्टुभि अतिछन्दःसु । बृह-
ति उद्गीथादेर्नीचीभावप्रतिषेधः *साहीयेग्नेत्वँसर्वः* स-
त्रासाहीये अग्नेत्वं नो अन्तम इति तृचे सर्वत्र उद्गीथा-
दिर्नीचैः । *विछन्दःसु च वत्सासु* । नित्यवत्सासु वि-
छन्दःसु सोमउष्वा । पवस्ववाजसातय इति च उद्गीथा-
दिनीचैः । *योनौ च प्र*नित्यवत्सासु प्रथमायामुद्गीथादि-
र्नीचैः । *शनवार्शयोः* । गायत्रीसामौशने वार्शे च उद्गी-
थादिर्नीचैः । *अनूने* । ऊने पादे शनवार्शयोरेव प्रतिषे-
धः । प्रेष्ठंवः प्राणाशिशुरिति च । *अस्मद्ग्रहणात्* । वार्शे
अस्मभ्यं सोमविश्वत इति ग्रहणान्नीचैः । *वर्णे च* रहस्ये
च शाकरवर्णे उद्गीथादिनीचैः । *न सोम* । अर्षा सोमा-
यां प्रतिषेधः । *ज्ञीयर्क्षु विशीये प्र*विशोविशीये यज्ञायज्ञी-
यर्क्षु प्रथमाया उद्गीथादिनीचैः । *क्रोशौपगवोत्तरवैष्णवै-
कर्चतृचहवद्देव्यवरुणयव वाजीयादारसछद्मीपपद निधनाचित्रष-
गयुग्वयामानां विपर्ययो यथा योनौ* । क्रोश२ँ अप-
गवोत्तरे वैष्णव एकर्चे सोमउष्वायां तृचस्थे इहवद्वामदेव्ये

र्चतृचहवद्वैऽथवरुणयववाजीयादारसृच्छुद्धीय पदानिध-
नाचित्रषङ्क्युणवयामानां विपर्ययो यथा योनौ ॥ १० ॥
ग्रहणानि श्येते योनौ प्रे वाहे शृङ्गे वत्सायां क्रम-
श्वे च पूर्वे बृहतिचायोनौधः सन्तानिनि पूर्वेष्ठ-

---

एतमुत्यायां वरुणसाम्नि ज्योतिर्यज्ञायां ईनिधने मार्गीयवे परि-
प्रियायां रायो वाजीये स्वासु आदारसृति पवमानस्य जिघ्नगा-
दिषु शुद्धाशुद्धीये अभिनोवाजसादिषु । अतीषङ्गे यदिन्द्र चि-
त्रायां । यवरावे अर्षा सोमायां यामे आयङ्गौरिति एतेषु च
यत्र योनौ उदूगीथादिनीचैस्तत्र ऊहगीतौ उच्चैर्भवति यत्र
योनौ उदूगीथादिरुच्चैस्तत्रोहगीतौ नीचैर्भवति एवं विपर्ययः ।
इत्युदूगीथाधिकारः ॥ १० ॥

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये प्रथमस्य
दशमी कण्डिका ॥ ७ ॥

---

*ग्रहणानि* । इदानीं संकरे एव ग्रहणं निवर्तते इदानीं संग्रहः ।
नैकवत् उच्चावचग्रहणानि वर्त्तिष्यन्त इति वाक्यशेषः । *श्येते
योनौप्रे* । श्येते योनौ प्रथमायां प्रतिहारादि नीचैः सहस्रेणेति ।
*वाहे श्रृंगे वत्सायाम्* । ऐध्मवाहे गौश्रृंगे च नित्यवत्सायां च
योनौ प्रथमायां प्रतिहारादि नीचैः ऐध्मवाहे तु समानत्वात्पाद-
स्यार्थात्तिसृष्वपि । *क्रमश्वे च पूर्वे* साकमश्वे च पूर्वे यो-
नावेव प्रथमायां स्तोत्रीयायां प्रतिहारादि नीचैः । *बृहति च* ।
बृहति च सर्वत्र प्रतिहारादि नीचैः । *अयोनौ* । योनौ तु प्र-
तिषेधः । *धः सन्तानि । शुभ्रमश्व इति सन्तानिनि धः शब्दो-
नीचैः ऋकृसु पादितिधः शब्दस्य नीचीभावः प्राप्तः उदात्ताच्च

उहुवाइ गूर्द्उतसुम्ना तृलीयेमरु हविषयज्ञाप्रस्वामृतेसु मार्गाद्वितीये प्रसोप्रास्य द्वे ढेचत्त्वꣳसर्वास्विन्द्रक्रतुमध्यमायाश्च श्नौष्ठ उत्तमास्त्रयः प्र द्वौम शीये ब्रह्मायूथेगिरां मीढमानवयोस्तृतीयो दावसुनिधन

---

परमक्षरमुच्चीभवतीति उच्चीभावः प्राप्तः। न चतुर्थहकाराघोषादयउच्चारत्वतीति नीचीभावः प्राप्त एव पुनर्गृह्यते परिसंख्यानार्थं युक्तः सैंधुक्षितादिषु धः शब्दो न नीचैर्भवति *पूर्वे ष्ठुउहुवाई*। पूर्वे वासिष्ठे उहुवाईशब्दो नीचैः सिद्धग्रहणात् इहैव सता तृतीयादि नीचैः अन्यत्र न भवति यथा एकाक्षरणिधनेयौधाजये *गूर्द्उतसुम्ना *गूर्द्दे उतआता सुम्नायनूनामिति च नीचैः *तृलीये मरु* वृषापवस्वायां रोहितकूलीये मरुत्वते च मत्सर इति नीचैः *हविषयज्ञाप्रस्वामृतेसु* यज्ञायज्ञीयनिधने सौहविषे एकाक्षराणि उदाहरणानि परिप्रधन्वा स्वादुः अमृताया इन्द्रस्ते सुतस्य एतेषां नीचीभावोऽधिकारात्। *मार्गी द्वितीये प्रसोप्रास्य द्वे* मार्गीयत्वे द्वितीयपादादिः नीचैः प्रसोविपश्चित इति प्रथमायामस्यप्रत्नेति द्वयोः *ढे च त्वꣳसर्वास्विद्रक्रतुमध्यमायां च* पौरुमीढे च त्वमङ्गप्रशꣳसिष इति सर्वासु स्तोत्रीयासु इन्द्रक्रतुमध्यमायां द्वितीयपादादि नीचैः। *श्नौष्ठउत्तमास्त्रयः प्र* श्नौष्ठे उत्तमास्त्रयः पादाः प्रथमायां स्तोत्रीयायां नीचादयो भवन्ति। *द्वौम *मध्यमायां स्तोत्रीयायां उत्तमौ द्वौ पादौ नीचादी भवतः। *शीये ब्रह्मा यूथेगिरां *उद्वꣳशीये ब्रह्माणस्त्वाशतक्रतो यूथेन गिरामुपश्रुतिं च एते नीचादयः। *मीढमानवयोस्तृतीयः *पौरुमीढे पूर्वे मानवे च तृतीयापादादि नीचैः। *दावसुनिध-

पूर्वजनित्रजंभ शुद्धीय विशीयष्णवैकचौरुक्षयौकोनिधनेषु च नौगोजीच नवेच तृतीये तृतीयं तुरीयमर्षापौशिच्चिमानो गवे तृतीयोनतरदर्षाकरेभि प्ररेवैयश्वे नौ ष्ठश्वेकेनीचैः पृश्निनानिपृताच हविषेन्द्रभिरित्यभिगीतमेकेदंष्ट्र उत्तरोविकृतस्तावोच्चरेद्वेपार्थ

---

नपूर्वजनित्रजम्भशुद्धीत्यत्रिशीयवैष्णकचौरुक्षयोकोनिधनेषु च नौ* दावसुनिधने पूर्वे जनित्रे बृहन्निधने वार्कजम्भे पदनिधने शुद्धाशुद्धीये विशोविशीये एकर्चे वैष्णवे औरुक्षयेऔष्णहऔकौनिधने । एतेषु तृतीयपादादिर्योनावेवन्नीचैः ऊहगीतौ प्रतिषिध्यते *गोजीच* । औकोनिधने गोजीरयेतियोनावेव ग्रहणान्नीचैः । *नवे च तृतीये तृतीयं* । पूर्वे मानवे तृतीये पादे तृतीयमक्षरं नीचं भवति । *तुरीयमर्षापौशिक्षमानः । *अर्षामित्रस्यपौशिक्षमानः । अर्षामित्रस्य पौरो अश्वस्यशिक्षाणो अस्मिन्नुमानो अज्ञाता एतेषु मानवेतृतीयेपादे एव च तुर्थमक्षरं नीचं भवति । *गवेतृतीयः । *गौगवे तृतीयपादादिनीचैः । *नतरदर्षा* । तरसमुद्रमर्षामित्रस्येति च गौगवे न नीचैः । *करेभि* । शार्क्करेअभि व्रजन्ततिनिषं इति नीचादिः । *परेवैयश्वेनौ* । वैयश्वेप्रतिहारादौ योनावेव प्रथमायां नीचीभावः । *ष्टश्वेके नीचैः* । वैयश्वे द्वितीयायां स्तोत्रीयायां धियाशविष्ठेतिष्ठशब्दं एके नीचैर्मन्यन्ते नतु ग्रन्थकारस्याभिमतं । *पृश्निनानि पृता च *योराजायां पृश्निनि पृतनामिति एके नीचैर्मन्यन्ते नतुग्रन्थकारस्याभिमतम् । *हविषे द्रिभिरित्यभिगीत मेके* सौहाविषनृभियेमाणो अद्रिभिरित्याभिगीतमेके मन्यन्ते ग्रन्थकार उद्गातमेव । *दंष्ट्रउत्तरेविकृतस्तावः* अष्टादंष्ट्र उत्तरे अविकृतः प्र-

एकॅ्षष्ठे नित्रे च जनितेति द्वेञीये वय मूर्जस्तॅसिश्च मातधीति वारेचाद्याच्यावसधमा सुर्य सवनाजन गृहचंम श्वाईकाराद् वृद्धन्धानोनाजायोरोषमग्नि- मित्युत्तमाश्चत्वारस्तमसे योनौ द्वौ द्वावुत्तरा वह्श्च

स्तावो भवति विकारवचनादविकारवचनात् अविकृत इत्य- वाच्यम् । तदुच्यते कथं नुचतुर्थोच्चस्य अभ्युद्गहस्य प्रथमोच्चध- र्म्मः स्यादिति । तेन किं संहिते स्त्रादिष्ठयेत्यत्र दिशब्दस्य उदात्ताच्च परमुच्चीभवतीति उच्चीभावः सिद्धोभवति यथा उद्गंशीये गायन्तित्वेति यशब्दस्योच्चीभावः । *अक्षरे द्वे पार्थे- *पार्थे वृषाशोणादिषु पादेषु द्वद्वे अक्षरे नीचे भवतः । *एक ष्ठे *इहवद्वासिष्ठे वृषाशोणादिषु पादेषु एकैकमादौ नीचं भवति । *नित्रे च* जनित्रे च पादादावेकैकमक्षरं नीचं भवति जनित्रे- ति द्वे *जनितेन्द्रस्य जनितादिव जनिताग्नेरिति च द्वे नीचे भवतः ञीयेवयमूर्ज्जस्तं सिवमातधीति यज्ञा यज्ञीये *वयममृतं ऊर्ज्जोनपातं उद्गंसिच अनुमातरं यत्तेधीति एते शब्दा नीचादयो भवन्ति। वारे- चाद्या*पूर्वे वारवंतीये चासाच्चनिमा द्यायोः पाहिसदामिति च द्या- शब्दो नीचैः अकारस्योपरिष्टाल्लोपं वक्ष्यति लोपालोपप्रकरेण । च्यावसधमारमासुर्यसवनाजनगृहक्षंमश्वापिकारात् *च्यावने इमा- ब्रह्मसधमादे असुर्यस्य सवनामानुषेषु जनयत प्रशस्तं गृहपतिमथर्व्युं प्रतिचक्षंमशब्दश्चापिकारात् मघवन्माचमेमां एते शब्दा नीचादयो भवन्ति । वृद्धं धानोनाजापोरोषमाग्निमित्यत्र माश्चत्वारः वृद्ध- भवति वक्ष्यमाणेषूदाहरणेषु धानो नाजापोरोषां परिधाई दुहानो नाईवयाम्रिम जाइतीवो योदीर्घजितं दुरोषं अग्निनर इतिनृचे- उत्तमाः पादाः श्चचारो वृद्धा भवन्ति दक्षाय्यो मेद्वो पूरोनो तूर्वांशा

नैपोर्जोमहस्ते मह्वाचान्त्या प्रयघृतवनिश्रीरेभद्रादेवे पुरुदानामृतौग्रहणं प्रवतिपादादौ द्वेमध्ये चेदुर्यु-वमन्द्रोशैकमन्यत्र सप्त हेत्त्वसंयुक्तपादादौ द्वे मध्ये-योनित्रवरथ्ये मेक्रमन्यत्र गोष्ठप्रतोद् पुष्प धर्मवि-धर्म्मपार्श्वसन्तन्यवाजॐसदांविनरे परमज्याः पुत्र-स्य मत्सरासौमित्र संकृतिवात्सप्रदॐष्ट्रोत्तरभ्राजकी-र्त्त्यर्यशः सॐसर्पभद्र श्रेयोश्वत्रतैकवृषांजोरूप ह-स्वानां पादानिर्दिर्यथर्चङ्गवाश्वोत्तरे ऽछिद्ररायिष्ठयो-

---

एते शब्दा वृद्धा भवन्ति।तमसे योनौ द्वौ द्वबुत्र रोसहोदैर्घतमासपो-नोस्वासुन्टचेपिबासोमापांपातिस्तोत्रीपंउ त्ररौ द्वौ द्वौ पादौ नीचादी भवतः। अहं च अहंशब्दस्य तत्राह॒मोमोसत्रसहोदेर्चमस एत्रग्रहणम् अहं सोमरारणेति नीचैः *नैपोर्जोमहस्ते मह्वा चांसा*नैपातिथऊ-र्ज्जोनपातं महस्तेसतो मह्वाचांसा मह्वादेत्रानम सूर्य३ति एते नीचाद-यः *प्रयघृतवन्ति*आत्वामनक्तु प्रयता ऊर्ज्जोनपातं घ्टतइंद्र॒प-मीकेवनिच एतेशब्दानीचैः *श्रीरेभद्रादेवपुरुदाना*श्रायंतीये भद्रा इंद्रस्य देवेभ्यो मधुमत्तरः पुरुप्रशस्तम्त्रनेययानापत्रारियाणी इतिप्रतिहारे नीचादयः *अमृतौ ग्रहणं* द्वितीयोऽभूदमृतशब्दस्य ग्रहणान्नीचीभावः *प्रवातिपादादौ द्वे* प्रवद्धार्गवे पादादौ द्वे अक्षरे नीचे भवतः । *मध्ये चेन्दुर्युवमन्द्रोशे* पादमध्ये च द्वे द्वे अक्षरे नीचे भवतः । इंदुरिन्द्रा३ युवाति भा३ नुशने६ वा३ *एकमन्यत्र* अन्यत्र पादमध्यादौ एकं नीचं भवति। *स-प्तहेत्वसंयुक्तपादादौ द्वे* सप्तहेतुसंयुक्तपादादौ मुक्त्वा यथा त्वामिद्धि त्वां वृत्रेषु काष्ठासु एतान्मुक्त्वा अन्यत्र पादादौ द्वे द्वे अक्षरं नीचे भवतः *मध्ये योनिं त्रवरथ्ये* पादमध्यादौ च द्वे

श्वानः श्यासनेम रीक्षस्थानयोश्चामीद्वां नहिरिक्षे

---

द्वे अक्षरे नीचे भवतः । योऽ२नि२मृतस्य२त्रत्र्ज्ञ१.हा३राछि१.यमई ।
*एकमन्यत्र *अन्यत्र पादमध्यादौ एकमक्षरं नीचं भवति *गो-
ष्ठप्रतोदपुष्पधर्मविधर्म्मपार्श्वसंतनन्यवाजऽसदोयिनरेपरमज्याः पु-
त्रस्यमत्सरासौमित्रसंक्रुतिवात्सप्रदंष्ट्रोत्तरभ्राजकीर्त्त्यर्यशः संस-
र्पभद्रश्रेयोऽश्वव्रतैकवृषांजोरूपहस्वानां पादादिर्यथर्चं *गोष्ठे
मृज्यमानः प्रतोदे श्रीणंतः अर्कपुष्पे तवाहंसोमादिषु ध-
र्म्मविधर्म्मणोः (पवस्वसोममहांसमुद्रः महेदक्षाय) स्वासु गाय-
त्रपार्श्वे मोषुत्वादिषु संतनिनि अस्ताविनमन्नादिषु । अवा-
जं सन्तनिनि वाजदर्शीतिप्रतिषेधः सदोविशीये आनोवि-
श्वादिषु नरे सदोविशीये प्रतिषेधः न प्रतिहारे
परमज्याः पुत्रस्य शत्रसोमत्सरासः एतेषु पादादेर्नीचीभाव-
प्रतिषेधः । सौमित्र इन्द्राय सामसंक्रुति विपरीतोष्यादिषु वा-
त्सप्रे सोमः पवतायां दंष्ट्रोत्तरे तवाहंसोमादिषु
भ्राजे अस्य प्रत्नायां महादिवाकीर्त्ये श्रायन्तादिषु
तृतीये संसर्पे उत्सोदेवायां भद्रे स्वासु श्रेयसि पवस्वसोमम-
न्दयन्निति । अश्वव्रते अभिवाजी विश्वरूपः एकवृषे अ-
भिप्रवायां अंजोवैरूपे अभिसोमासः हस्वाबृहदोपशायां सु-
तासोमादिषु एतेषु पादादि यथर्चं भवति *गवां चोत्त-
रे* गवां व्रते च उत्तरे स्वादिष्ठयायां यथर्चं पादादयः
*अछिद्ररयिष्ठयोश्च* अछिद्ररयिष्ठयोश्च पादादिर्यथर्चं भव-
ति *अनश्यासनेम* अश्यामवाजसने मवाजइतिच न यथर्चावे-
तौ *रीक्षस्थानयोश्च* अन्तरिक्षदेवस्थानयोश्च पादादिर्यथर्चं
भवति अभिसोमादिषु परीतोष्यादिषु *अमीद्वान्नहिरिक्षे* मी-

नहारेत्समारा राय आकुदेवानग्निं स्तोभानाञ्चावक्का
न्तविमायाविन उक्षाचैके भासे चानासन्पुरः सुताप-
रियज्ञोचैर्वरीयवे गांवर्त्ते सत्पर्णे सद्भ्यां वर्णे सधष्टम्भे
नः सौमेधे हरिं हिष्ठीये वने च रन्ध्रोत्तरे येमागौ-
तमे ष्टम्भे च रुते च न किस्त्यगोष्ठार्कपुष्पयोर्लवरुणा-

---

द्धान्त्साप्तिः न हि त्वदन्यदिति च अन्तरिक्षे न यथर्चं। *नहारेत्सरारा-
य आकुदेवानाग्निम् *वत्सरासः राय आकुह इति च देवानागच्छन्तु-
अग्निं अग्निःयज्ञेषु। एतेशब्दाः प्रतिहारे अंतरिक्षे न यथर्चं *स्तोभा-
नां च* पदस्तोभानां च पादादिर्यथर्चं *अवक्कान्तविमायाविनः*
वक्कापतिः तविष्यमाणः मायाविन एते न यथर्चं। *उक्षा चैके*
उक्षामिमेति एके न यथर्चं मन्यन्ते। *भासे च *दशस्तेभे-
भासे च पादादयो यथर्चं *अनासन्पुरः सुतापरियज्ञा* अनुआ-
सन्नः पात्रं पुरोजितीसुतायमादपरिप्रतेयज्ञायसांश्रिति च एतेषु न
यथर्चं *उच्चैर्वरीयवे *आमहीयवे वरिवोवित्परिस्रव इत्युच्चैः *गां-
वर्त्ते *अभीवर्त्ते गांन्वचर्षणीसहामित्युच्चैः। *सत्पर्णे* स्वार-
सौपर्णे ऊनीसदादिविसद्भूमिसवशब्द उच्चैः *सद्भ्यांवर्णे *शा-
क्करवर्णे दिविसद अस्मभ्यं सोमासछन्दोभ्यंशब्दश्च उच्चैः।
*सधष्टम्भे* प्रत्नंसधस्थमिति सधशब्दोमहावैष्टम्भ उच्चैः।
*नः सौमेधे *मैधातिथे पुनानः सोमेति नः सोमशब्द उच्चैः
*हरिंहिष्ठीये *यद्वाहिष्ठीयं परिस्रंहर्यतंहरिमित्युच्चैः *वने
च रंध्रोत्तरे* अक्ष्णोरंध्रेवृषो अचिक्रदद्वन इत्युच्चैः *ये मागौ-
तमे *उभयतः स्तोभे गौतमे समुद्रस्याधित्रिष्टुपेमनीषिण इति ये
मा इत्युच्चैः *ष्टम्भे च *महावैष्टम्भे च येमा उच्चैः *रुते च नकिः
*मारुते च नकीराया इत्युच्चैः। *स्त्यगोष्ठार्कपुष्पयोः* मृज्य-

साम्नि एवन्नूस्यत्ये द्विपदासु च वाजजिति विकर्णेचा-
तिछन्दःसु च देव्ये ऽपांव्रतयोर्गवाञ्च पूर्वे लेये योच्चा-
दिर्यस्याछोत्तरयोःपरिमन्नायां च ॥ ११ ॥

नीचात्परःषःषेधमैधदैर्घवै यश्वपृश्निकौल्ममद्रु-

---

मानः सुहत्स्येतिस्यशब्द उच्चैः । *लंवरुणसाम्नि *वरुणसाम्नि-
रीयं पिशङ्गं बहुलं पुरुस्पृहमितिलं शब्द उच्चैः । *एवन्नूस्पसे*
दाशस्पसेवारिवःकृवणन्नित्वितिउच्चैः । *द्विपदासु च वाजजि-
ति* द्विपदासु च परिमथन्त्रायां वाजजिति अविशेषो-
पदेशात्सर्वे पादादय उच्चैः । *विकर्णेच* विकर्णे च श्रा-
यन्तादिषु सर्वे पादादय उच्चैः । *अतिछन्दःसु च देव्ये*
पञ्चनिधने वामदेव्ये त्रिकद्रुकायां पादादयः उच्चैः । *अपां
व्रतयोः *पुनानः पुरोजितोः सर्वे पादादय उच्चैः । *गवां
च पूर्वे *पुनानः सोमायां सर्वे पादादय उच्चैः । *लेयेयोच्चा-
दि र्यस्याछोत्तरयोः *परिमत्नायां च *कालेये सर्वत्र तृती-
ये पादे तृतीयं पर्व चतुर्थात्स्वरादारभ्यते एष उत्सर्गः । एतेषु तु
उदाहरणेषु तृतीयायात्स्वरादारभ्यते यस्यायं विश्वा अया अच्छा-
नःशीरशोचिषमिति च एतयोस्तृचयोः उत्तरयोः स्तोत्रीययोः उ-
दाहरणानि मधुमन्तंघृतंमथे वृष्टियं सहसोजातमृतोमर्त्येष्वपरीतोष्यां-
चारियोअप्सु च मत्रं ऽस्नन्धायांवरुणंवाजि य एते तृतीयस्वरारंभाः ।

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये प्रथमस्यै-
कादशी कण्डिका समाप्ता ॥

*नीचात्परः षः षेधमैधदैर्घवैयश्वपृश्निकोल्ममद्रुस्थानेषु*
निषेधे मेधातिथे दैर्घश्रवसे वैयश्वे पृश्निनि कौल्मले पौरुम-
द्रे देवस्थाने एतेषु नीचात्परः षः शब्द उच्चीभवति । अपो

स्थानेषु सिनिहतमसंहितं पृश्निदैर्घयोर्जितिभि-
या सिते स्वयातमापुरूसुतमूसदोविशीयाष्टिडरूपे-
षु क्रौंच्यष्टंभतमछन्दसवैयश्वत्वाष्ट्रीसामार्द्धेडश्यैत
साध्राणां यथर्चस्तृतीयोदादिरशुष्टआरत्नधानह्यना-
रत्नधावैयश्वे वाशेचा ऽपुनामान्त्ययोरुभयं प्रान्त्ययोः
षूक्तेचापरिप्रिवृषामोच्चाद्ययोर्वादिर्गीथादिर्द्धनादिश्च

---

वसानोअर्षसीति एतेषु सामसूच्चीभवति । *सिनिहतमसंहितं
पृश्निदैर्घयोः* अपोवसानोअर्षसीतिसिशब्दो ऽसंधीयमानो
निहन्यते सन्धौ तु उच्चीभवति पृश्निदैर्घयोः साम्नोः *जि-
तिभिया* वाजजिति पवमानभ्यर्षसीतिभियाशब्द उच्चैः ।
*सितेस्वयातमापुरुसुतं* आसितेद्वियपञ्चस्वयायओजिष्ठस्तम-
तस्पसाय: पुरूमइमामिंद्रसुतां एतेषु द्वे द्वे अक्षरे उच्चीभव-
तः । *ऊसदोविशीयाष्टिडरूपेषु *उशब्दः तरत्समुद्रं सदोविशीये-
इन्द्रस्यमोमपवमानऊर्मिमणअष्टिडेतरत्समुद्रं वैरूपे एतेषु ऊशब्द
उच्चैः । *क्रौंच्यष्टंभतमछन्दसवैयश्वत्वाष्ट्रीसामार्द्धेडश्यैतसाध्राणां य-
थर्चस्तृतीयोदादिः* एतेषु सामसु यथर्चस्तृतीयः पादादिर्भवति ।
*अशुष्टआरत्नधानहि *अः प्रतिषेधे शुष्टेजाताश्रुष्येआरत्नधा आ-
रत्नधाशब्दोमहावैष्टंभे छन्दसयोः नहि त्वदन्यन्मघवन्नयते यथ-
र्चं । *अनारत्नधावैयश्वे* अनुपूर्वसूत्रादयथर्चप्राप्तौ वैय-
श्वे आरत्नधा प्रतिसूयते । *वाशेच* वाशे च तृतीयपादादि-
र्यथर्चम् । *अपुनामान्त्ययोरुभयंप्रांत्ययोः* । अपुनानः सोमा-
यांमध्यमांत्ययोः (नयथर्चं) उभयं स्तृणप्रथमान्त्ययोः वाशे न
यथर्चं तृतीयपादादिः । *षूक्ते च* षूक्ते च तृतीयपादादि-
र्यथर्चम् । *अपारिप्रिवृषामोचाद्ययोः* परिप्रिया वृषापव-

रूपे घसे वे कृष्टाद्भिस्तोमुद्राऽजिष्ठश्चश्ववा उयोरि-
न्नरोजि नदे च दुरो ब्रध्नः षष्टिपयन्ति तुरे धारया द्वि-
मन्द्रात्रासदे वक्रया च द्विर्नीचा सोम साम्नि च त्रेये
रया नौसधरेवतीषु पयसिपारिनोगि षिवमन्तोत्थयो-
र्धे द्विद्ंष्ट्रे सासिते समीमस्रुचे हव्येहाराद्वितीय-

---

स्व मध्यमायां उच्चाग्रयोस्तृतीयपादादिर्न यथर्चम् । *त्रादि-
गीथादिर्धनादिश्च रूपे *गायत्रीसाम्नि वैरूपे प्रस्तावादिरु-
द्गीथादिर्निधनादिश्च नीचादयः । *घसे वेकृष्टाद्भिस्तोमुद्राजि-
ष्ठं च श्व वाज्योरिंनरोजि *नौधसे प्रस्तावे कृष्टात्परप्रस्तावे च-
तुर्थे परे द्वे द्वे अक्षरे उच्चे भवतः अभिस्तोभैः समुद्र इव यजि-
ष्ठं स्रुचश्चरन्ति जीवाज्योतिः गिरिन्न पुरोजिती एतान्युदा-
हरणानि । *नदे च* दुरोनदे चतुर्थे स्वरे दुरोशब्द उच्चैः ।
*ब्रध्नः षष्टि पयंतितुरे* वार्त्रतुरे ब्रध्नाश्विग्रस्य षष्टिं सहस्रा
अस्वापयन्निगुन एते शब्दा नीचादयः । *धारया द्विमन्द्रा त्रा-
सदे *सदस्यवेयोधारयेत्यत्र द्वे अक्षरे मन्द्रे भवतः । *वक्र-
याचाद्विनीचा* पावकयेति च द्वितीये स्वरे द्वे अक्षरे नीचे
भवतः । *सोमसाम्निच *वकया पूर्ववत् । *त्रेये रया *आ-
त्रेये धारयेति द्वितीये नीचा तथैव पुरोजिती तृतीयायाम् ।
*नौसधरेवतीषु *योनौ रेवतीषु रेवतीर्न्नायांयोनौ लधशब्दोनी-
चैः । *पयसिपारिनोगि* पयसि परिस्वान इति अत्र अ-
भ्यासो द्वितीयः नोगिरिष्ठा इतिद्विनीचः । *षिवमन्तोक्थयो-
र्घे *परीतोषिश्च समन्तेवार्हदुक्थे । चाषिशब्दः प्रस्तावात्रिष-
ये दुहानोइति चदुषू शब्दोनींचैः । *द्विदंष्ट्रे* अष्टादंष्ट्रे
अधिकारात् प्रस्तावे सुषावसोममद्रिभिरितिशब्दोनीचैः ।

मपुरोजिप्रान्त्ययोर्निंत्रे पुरोजिमध्यमायाᳫंश्यैते च थे त्रिष्टुप्प्रान्त्ययोर्नैयेगीथतृतीयं चतुर्थेच ष्ठौहाद्यं नौचपञ्चमं च साम्नि च तृतीयं नवृद्धे वᳫंसंकृतियशसोर्वृण्यादिः कमश्वे नोत्तरयोः स्वासु ष्ठश्च दे्व्ये-

---

*षासिते *आसिते अयं पूषेति षाशब्दो नीचैः । *समीमस्त्रुचे *यौक्तस्त्रुचे इन्द्रᳫंसमीशब्दो नीचैः इन्द्रोमहेति सशब्दो-नीचैः *ह्व्येहारद्वितीयम्* । वैतह्व्ये प्रतिहाराद्वितीयं सर्वत्र नीचैः । *अपुरोजिप्रान्त्ययोः *अपुरोजिप्रथमांत्ययोरपवादः । *नित्रपुरोजिमध्यमायां *उत्तरे जनित्रे पुरोजिमध्यमायां प्रतिहाराद्वितीयं नीचैः । *श्यै ते च थे त्रिष्टुप्प्रान्त्ययोः *शैते च-त्रिष्टुभि उद्गीथे प्रथमान्त्ययोः स्तोत्रीययोर्द्वितीयमक्षरं नीचैः तदिदासभुवेत्यत्र । *नैये गीथतृतीयं *नैयातिथे उद्गीथतृतीयं सर्वत्र नीचैः । *चतुर्थं* चयाजिष्ठं वहीतिचतुर्थमक्षरं वशब्दो नीचैः । *ष्ठौहाद्यं* पाष्ठौहे उद्गीथाद्यमक्षरं नीचैः । *नौच पञ्चमं *पाष्ठौहे योनौ उद्गीथपञ्चममक्षरं नीचैः *चः साम्नि च तृतीयं *वाचः साम्नि च उद्गीथतृतीयमक्षरं नीचैः । *न वृद्धे । *वाचः साम्नि च वृद्धे अक्षरे प्रत्यये सहस्रधारं वृषभं पयोदुहमिति उद्गीथतृतीयस्य नीचीभावप्रतिषेधः । *वᳫं संकृतियशसोः *अप्सुवन्तरेति वंशब्दो नीचैः । *वृण्यादिः कमश्वे *साकमश्वे वृण्यादि नीचैः एभिर्वर्द्धन्ति । *नोत्तरयोः स्वासु *साकमश्वे एह्लूषुवृचे उत्तरयोर्वृण्यादेः प्रतिषेधः तत्र योनिं अथादुवइति च । *ष्ठश्च* होतायजिष्ठ इति साकमश्वे ष्ठशब्दो नीचैः । *दे्व्येविष्ठ *वामदे्व्ये सुम्यायविष्ठेति विष्ठशब्दो नीचैः *ष्ठाभ्यासे *अभ्यासे विषये सुम्यायविष्ठेति विष्ठशब्दो नी-

विष्ठ छा भ्यासे मनाज्येवादिराथि रानन्त्यं ज्येच हरे द्वितीयोदादि रवरुणा त्रिणिधनायास्ये स्वानोनित्र-वत्रिष्टुप्सुत्सप्रेदादयः पुरौजिचाद्यो वैराजेचाभ्या-सोहश्चनौ च सर्वास्वहङ्गताभीशवयोरहंगताभी-शवयोः ॥ १२ ॥

इति पञ्चमः प्रपाठकः ॥

---

चै । *मनाज्येवादिराथिः *गोतमस्य मनाज्ये प्रस्तावादि नीचैः। आपि *त्वेनामिचनीचादिः । *आनंत्यं *राधो आर्ष्यदया-इतिचनीचैः । अन्त्यवर्ज्जं च । *ज्येच *मानज्येष्ठन्तदधिषे-सह इति नीचादिः । *हरेद्वितीयोदादिः *आद्ये वार्षाहरे अ-र्षासोमतृचे द्वितीयपादादि नीचैः । *अवरुणा *वरुणा-य मरुभ्य इति द्वितीयपादादेरपवादः *त्रिणिधनायास्ये *स्वा-नः त्रिणिधनायास्ये श्रीणन्तायां परिस्वानश्चक्षस इति स्वा-नःशब्दोनीचादिः *नित्रवत्रिष्टुप्सुत्सप्रेदादयः* हाउजनज्ज-नित्रवत्रिष्टुप्सुवात्सप्रेसोमःपवतायां पादादीनां नीचीभावः । *पुरोजिचाद्यः *पुरोजितीवात्सप्रे वाऽद्य एव पादोनीचा-दि *वैरोजा चाभ्यासः *महावैराजे च पुरोजितां अ-भ्यासो नीचैः । *अहं च तवाहꣳसोमेति अहंशब्दो नी-चैर्महावैराजे । *नौचसर्वासु *योनौ च पिवासोमाग्रां तृचे अभ्यासो नीचैः । *अहङ्गताभीशवयोरहङ्गताभी-शवयोः *तवाहंनक्तोतिद्वैगताभीशवयोः अहंशब्दोनीचैः । उच्चनी-चं समाप्तम् ।

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये प्रथमस्य द्वादशी कण्डिका समाप्ता ।

प्रथमः प्रपाठकः समाप्तः ॥

अः कारोवृद्धः पदगीतः पादांते घोषाकारयोः प्रत्यययोः पुरो३३हाइता३धवा३दा३१इवा३२इदा३२हायाएवंजातीयानि संध्यागीतं वक्ष्यामो मदः शब्दः प्रथमः स्वरः पवस्वशङ्कुद्वितीयायां मत्स्यबृहतिच तमद्रिवोयदिद्रचित्रायां वसिष्ठप्रिये रर्थातरोनाकिष्टुद्रथामायामासिते हिषस्त्वेसोमयौधे पयोर्जीजनायां वाश्वे रसः स्वासु तमसोर्के पुरोनः प्रेद्धइत्यत्र मराये॥ १ ॥

---

*अःकारोवृद्धः पद्गीतः पादान्तेघाषाकारयोः प्रत्ययोः पुरो ३३ हाइता ३ धवा ३ दा ३१ इवा ३२ इदा ३२ हा ३ या २ एवंजातीयानि *अः कारोवृद्धः सन्पादान्ते वर्त्तमानः पदगीतो भवति । घोषेषु च प्रत्ययेषु अकारं च । अत्र स्वयमेवोदाहृतं । *सन्ध्यगीतं वक्ष्यामः *पूर्वलक्षणप्राप्तस्यापवादः* मदः शब्दः प्रथमः स्वरः पवस्वशंकुद्वितीयायां *महिन्नुक्षतमोमद इति पूर्वलक्षणेन पद्गीतत्वे प्राप्ते सन्ध्यगीतत्वमुच्यते *मत्स्यबृहति च* एष एव शब्दः सन्ध्यगीतो भवति *तमद्रिवोयदिन्द्रचित्रायां वसिष्ठप्रिये *अस्तिचादातमद्रिव इति वसिष्ठप्रिये सन्ध्यगीतो भवति *रथीतरो नकिष्टुद्रथायामासिते *नकिष्टुद्रथीतर इत्यासिते सन्ध्यगीतः *हिषस्त्वे सोमयौधे* त्वेसोमायां यौधाजये वृक्तबर्हिष इति सन्ध्यगीतः *पयोजीजनायां वाश्वे* अजीजनायां च विधारेशक्मनापय इति सन्ध्यगीतः *रसः स्वासु तमसोर्के *धर्त्तादिवः पवतेकृत्वोरस इति स्वासु ततमसोर्के सन्ध्यगीतः *पुरोनः प्रेद्धइत्यत्र मराये *प्रेद्धो

भक्त्यन्तः पदगीतः सर्वत्र संध्यगीतं वक्ष्यामः क्रौंचाष्टमिकेश्वोविभाष्यत उषसोभिप्रिवैखानसे द्वैगते पुनानायामुत्सो जिगन्नवस्तेपूतायांक्रौंचाष्टमिके

अग्ने दीदिहीति अत्र मराये पुरो न इति सन्ध्यगीतः ।

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये द्वितीयस्य प्रथमा कण्डिका समाप्ता ॥

---

*भक्त्यन्तः पदगीतः सर्वत्र* प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनानि भक्तयः तासामन्ते अकारो वृद्धः पदगीतः यथा यौधाजये उत्सः *सन्ध्यगीतं वक्ष्यामः* इहाप्युत्सर्गप्राप्तस्य भक्त्यन्तस्यापवादः *क्रौंचाष्टमिकेश्वो विभाष्यते* आष्टमिके क्रौंचे अयंपूषाद्ये इंदुरश्व इति श्वोशब्दौ भक्त्यन्ते विकल्प्यते । तत्र च भक्त्यन्त उत्तमपादादौ पर्वप्रतिहारः सनाय्य इति वचनात् पुष्पकारवचनाद्वा सूत्रकारवचनाद्वा अष्टाक्षरपदोत्तमानां चत्वार्यन्यत्र पङ्क्तिभ्य इति । इतरथा न प्राप्नोत्येष प्रतिहारः विभाज्यत्वात् *उषसोभिप्रिवैखानसे* वैखानसे अभित्रिपृष्ठउषसः प्रतिहारान्ते सन्ध्यगीतः *द्वैगते पुनानायामुत्सः* द्वैगते पुनानायां प्रतिहारे उत्सः सन्ध्यगीतः । यदापि दशाक्षरः प्रतिहारः तदापीदं सन्ध्यक्षरगीत एव । भक्तिमध्यः पादमध्यश्चास्तोभे प्रत्यये सन्ध्यगति इति वचनात *जिगन्नवस्तेपूतायां क्रौंचाष्टमिके* तेपूतायां आष्टमिके क्रौंचे जिगन्नोधुवाघृत इति सन्ध्यगीतः इहापि तदेव व्याख्यानं च । यत् क्रौंचाष्टमिके श्वोविभाष्यत इति उपग्रन्थकारवचनाच्च । तत्र पदसंख्यानामादेशे चतुरक्षरमाद्यं

मानऊर्जेइत्येतौ शब्दौ नौधसे नैंद्रः कईवेदायामाष्कार-णिधने काण्वे महोदिवशब्दौ प्रत्नंपीयूषायां यौधे प्र-स्मवाजेषुनश्चा ऽध्वर्यवः सुवार्विदइत्येतौ शब्दावाजागृ-विरित्यत्रौशान इन्द्रः शूरश्च महानाम्नीषु यद्वाᳪर-थोबोधीये वारेथादुवएह्यूतृतीयायां न्नुमद्रिवश्चब-र्हिषश्च तंतेमदायाᳪसिषासंतः श्रुधीहवायां देवᳪरा-

---

न्यायं प्रतीयादिति *मानऊर्ज्ज इत्येतौ शब्दौ नौधसे* मानोअ-ज्ञाता ऊर्ज्जो नपातं घृतकेशमिति च सन्ध्यगीतौ प्रतिहारत्वमेतयोः अनेकप्रतिहाराणामुत्तमसादृश्यात्पूर्वसादृश्याद्विप्रतिहारत्वं *नैं-द्रः कईवेदायामाष्कारणिधनेकाण्वे* आष्कारणिधने काण्वे क-ईवेदायां नेन्द्रोपोषतीति प्रतिहारभक्त्यन्ते सन्ध्यगीतः। *म-होदिव (इत्येतौ)शब्दौप्रत्नपीपूषायां यौधे* महोगाहाव् दिवोन-वारं एतौ शब्दौ सन्ध्यगीतौ निधनपरत्वादुपायान्तौ। *प्र-स्मवाजेषु नश्च* पाहिनोअग्नायां यौधाजये प्रस्मवाजेषु नोउपा-यान्तः सन्ध्यगीतः। *अध्वर्यवः सुवार्विदइत्येतौ शब्दावाजागृवि-रित्यत्रौशने* आजागृवायां अध्वर्यवोरथिरास इति सुवार्विदो-अभिगा अद्रिमितिचप्रतिहारे सन्ध्यगीतौ। *इन्द्रः शूरश्च महा-नाम्नीषु* छान्दसीषु सिमासु इन्द्रोविदेतमुस्तुहिशूरोयोगोषु-(गछतीति)सन्ध्यगीतौ एकः प्रतिहारे अन्यः प्रस्तावे *यद्वाᳪ-रथोबोधीये* वाचयन्तेवायां यद्वाᳪरथो इति सन्ध्यगीतः प्रति-हारान्ते *वारेथादुवएहूयूतृतीयायाम्* एह्यूतृतीयायां वारवन्तीये अथादुवोप्रतिहारान्ते सन्ध्यगीतः *न्नुमद्रिवश्च बर्हिषश्च तं ते मदायां* वारवंतीये तन्तेमदायां तुलोकन्तमुद्रिवोमन्दानोअस्य बर्हिषो प्रतिहारान्ते सन्ध्यगीतौ। *सिषासन्तः श्रुधीहवायां* वा-

धः सदुद्रवायांॅं रजः सूर्योविते महस्तवानोबृहद्र-
थंतरे पवित्रंवतइतिदेवासश्च ऽयंतेत्वाष्ट्रीसाम्नि ॥ २ ॥

भक्तिमध्यः पादमध्यश्च स्तोभे प्रत्यये पदगीतः
सर्वत्र संध्यगीतं वक्ष्यामोऽस्येदिंद्रः क्षारे वसुरुचउ-

---

श्वन्तीये श्रुधीहवायां सिषासन्तोवना प्रतिहारान्ते सन्ध्यगीतः
*देवॅ्राधः सदुद्रवायां* वारवन्तीये सदुद्रवायां देवॅ्राधो इति
सन्ध्यगीतः प्रतिहारान्ते *रजः सूर्योविते* गौरीविते असावि-
ते असाविसोमायां रजः सूर्यो इति सन्ध्यगीतः प्रतिहारान्ते
*महस्तवानोबृहद्रथंतरे* द्वितीयायां स्तोत्रीयायां महस्तवानो
इति सन्ध्यगीतः प्रतिहारान्ते *पवित्रवन्तइतिदेवासश्च ऽयन्ते
त्वाष्ट्रीसाम्नि* पवित्रवन्तो देवासो इति च द्विप्रतिहारत्वाकु-
भावपि प्रतिहाराते सन्ध्यगीतौ ॥

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये द्वितीयस्य
द्वितीया कण्डिका समाप्ता ॥

---

*भक्तिमध्यः पादमध्यश्च स्तोभे प्रत्यये पदगीतः सर्वत्र*
भक्तिमध्यः पादमध्यश्च स्तोभे प्रत्यये अः कारो वृद्धः पदगीतो
भवति यथा एडकावे आ३सू३रियास्यबृहतः३अधित्रिय३ध्वउष३
सो३ इति चतुषपेडेवामेअयंपूना३न३उष३सा३ इति एवमादीनि
*सन्ध्यगीतं वक्ष्यामः* पूर्वलक्षणेन अः कारस्य वृद्धस्य भक्तिम-
ध्यस्य पादमध्यस्य च स्तोभप्रत्ययस्य पदगीतत्वे प्राप्ते यत्र
सन्ध्यगीतं भवति तदुदाहरिष्यामः *अस्येदिन्द्रः क्षारे* आक्षारे
अस्येदिन्द्रोमदेष्वेति प्रस्तावमध्ये सन्ध्यगीतः *वसुरुचउत्सेधे*
आर्दी कोचिदिति अस्यां वसुरुचो इति उद्गीथमध्ये सन्ध्यगीतः

त्सेधे तुवः स्वारयोस्त्वाष्ट्रीसाम्नो रजः सूर्यश्च पूर्वे दे-वोधौतोमत्सरासोश्वश्वजम्भे बृषामदः स्वरेबृहन्निध-धने वयःस्वासु वत्सास्वभिद्युच्यावनेपासास्थं पव-स्वमधुमायांचें द्रःश्येनःसंतनिनिसोमोवाम्ने चन्द्रो-

---

(उत्सेधे) *तुवः सारयोस्त्वाष्ट्रीसाम्नोः* षष्ठसप्तमयोस्त्वाष्ट्रीसा-म्नोदेवान् गच्छन्तुवोमदाइति उपद्रवमध्ये सन्ध्यगीतः *रजः सूर्य-श्च पूर्वे* एतयोरेव पूर्वेत्वाष्ट्रीसाम्नि रजः सूर्य इति उपद्रवमध्ये पादमध्ये च सन्ध्यगीतः *देवोधोतोमत्सरासोश्वजम्भे* बृहन्नि-धने वार्क्कजम्भे उत्सोदेवो नृभिर्द्धौतोमत्सरसोइन्दुरश्वो इति च प्रतिहारमध्ये पादमध्ये च सन्ध्यगीताः *वृषामदः स्वरे बृह-न्निधने* बृहन्निधने स्वरे वृषामदोवरेण्य इति उद्गीथमध्ये सन्ध्य-गीतः । *वयः स्वासु वत्सासु* स्वासु निसवत्सासुश्रया-रुचायां रोचमानोवयो इति प्रतिहारमध्ये पादमध्ये च संध्यगीतः *अभिद्युच्यावने पासास्थं *अभिद्युम्नायां च्या-वने पासास्वस्य उद्गीथमध्यच्यक्षरं प्रतिहारपक्षेपि सन्ध्यगीतम् स-मुवो२ स्रू २ तो ३ ३ २ हा३ इयासास्वर^उद्ध्येदभितृतीये वृष-भंनर्वाहा २३ हा ३३३ या ३ ३ ३२ सां ३ *पवस्वमधुमायां* च च्यावने पवस्वमधुमत्तमायां च पाशास्वरस्थं उद्गीथमध्ये सं-ध्यगीतं भवति । *इन्द्रः श्येनः सन्तनिनि* इन्द्रोमदायां स-न्तनिनि पादमध्ये सन्ध्यगीतः इन्द्रो३ हा३उश्यो नोनयानिमि-ति च प्रतिहारमध्ये सन्ध्यगीतः *सोमोवाम्रे* वाम्रेसोमोयउत्त-ममिति सामशब्दः सन्ध्यगीतः उद्गीथमध्ये पादमध्ये च *चन्द्रो-बाभ्रे* वाभ्रवे हरिश्चन्द्रोमरुद्गण इति प्रतिहारमध्ये सन्ध्यगी-तः *राधः कौत्से* ऐडकौत्से पार्षिराधो इति प्रतिहारमध्ये सं-

वाभ्रे राधःकौत्से मयोभरे स्तोतृभ्योवारे देवःपुनाभि-
सोमयोमर्धैष्टंभयोस्तावे मत्सरासश्च ॥ ३ ॥

भक्तिमध्यःपादमध्यश्च स्तोभे प्रत्यये संध्यगीतः स-
र्वत्र पदगीतं वक्ष्यामोदेवःप्रत्युक्रांतऐडयास्यद्वितीया-
यां जिगन्नवस्तेपूतायां वाङ्निधनेक्रौञ्चे जारःप्रसुन्वानद्वि-

ध्यगीतः *मयोभरे* सौभरे उग्रश्चक्रामयोधृषदितिप्रतिहारमध्ये
संध्यगीतः *स्तोतृभ्योवारे* वारवन्तीये स्तोतृभ्योधृष्णुधीयान-
इति प्रतिहारमध्ये संध्यगीतः । *देवः पुनाभिसोमयोर्मेधष्टम्भ-
योः स्तावे* उत्सोदेवोराजा देव इति च मैधातिथवैष्टंभयोः
प्रस्तावमध्यसन्ध्यगीतौ । *मत्सरासश्च* मत्सरास इति च प्र-
स्तावमध्ये पादमध्ये च मैधातिथमहावैष्टंभयोः संध्यगीतौ । (मध्यः
पादमध्य इति सर्वोदाहरणेषु अधिकारो द्रष्टव्यः) ॥

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये द्वितीयस्य
तृतीया कण्डिका समाप्ता ॥

*भक्तिमध्यः पादमध्यश्चास्तोभे प्रत्यये सन्ध्यगीतः सर्वत्र*
भक्तिमध्यः पादमध्यश्च अस्तोभे प्रत्ययेः अः कारोद्धः संध्य-
गीतः सर्वत्र भवति एष उत्सर्गः उदाहरणानि दुहानयौधाजय-
द्वैगतयोः पौरुहन्मनगौङ्गवयोः प्रस्तावमध्ये पादमध्ये च संध्यगीतः
एवमादीनि *पदगीतं वक्ष्यामः* पूर्वलक्षणेन सन्ध्यगीतप्राप्ताना-
मपवादः *देवः प्रत्युक्रान्त ऐडयास्य द्वितीयायां *ऐडयास्ये
उत्सोदेव इति उद्गीथपादमध्ये पदगीतः *जिगन्नवस्ते पूतायां
वाङ्निधने क्रौञ्चे* वाङ्निधने क्रौञ्चे ते पूतायां जिगन्नव इति उप-
द्रवमध्ये पदगीतः *जारः प्रसुन्वानद्वितीयायां विते* गौरीविते-

तीयायांविते हीषीस्वरतत्सत्रिणिधनायास्ये घृतव्रतत्रैशोके भरन्तःसौभरलेययोः पुरोजिनरइत्येतौ शब्दौ मराये शुचयइमाउत्वायाः२श्यैते स्वःकार्त्तयशौदलस्यवेषु श्येनःसंमिश्लायाः२स२हिते जातोवाचः साम्निप्रियंदेवायां दधन्वांयःसर्वत्र दक्षशूरावर्के-शार्ङ्गेच ब्रह्मयुजोभारद्वाजे पुरांदर्मआमंद्रैरित्यत्राभि-

---

प्रसुन्त्राद्वितीयायां सरज्ञार इति उद्गीथमध्ये पदगीतः । *हीषीस्वरउत्सर्गोत्रिणिधनायास्ये* त्रिणिधनायास्ये द्वितीयायां उत्सोदेवो हीषी स्वरस्य उद्गीथमध्ये पदगीतः *धृतव्रतत्रैशोके* त्रैशोकोत्तमायां धृतव्रत इति उपद्रवमध्ये पदगीतः *भरन्तः सौभरलेययोः* स्छूरंनकच्चिद्भरंतइति सौभरकालेययोः उद्गीथमध्ये पदगीतः *पुरोजिनरइत्येतौ शब्दौ मराये* मराये पुरोजितीवः । अग्निनर इति च प्रस्तावमध्ये पदगीतौ *शुचयइमाउत्वायाः२श्यैते* पावकवर्णाः शुचयइतिश्यैतेउद्गीथमध्येपदगीतः । *स्वकार्त्तयशौदलस्यवेषु* इंदुरश्वः कार्त्तयशे द्वितीयायां उद्गीथमध्ये पदगीतः अदले उपद्रवमध्ये पदगीतः आसदस्यचिद्वितीयायामुपद्रवमध्ये तृतीयायां च प्रस्तावमध्ये पदगीतः *श्येनः संमिश्लायांस२हिते* स२हिते च सीदच्छ्येनइति उपद्रवमध्ये पदगीतः *जातौ वाचः साम्नि प्रियंदेवायां* वाचः साम्नि ऋतेन यऋतजात इति उद्गीथमध्ये पदगीतः *दधन्वांयः सर्वत्र* दधन्वायां य इति सर्वत्र वृद्धः सर्वत्र पदगीतः *दक्षशूरावार्के* दीर्घतमसोर्के दक्षोदेवानां-शूरोनवत्त इति च प्रस्तावमध्ये पदगीतौ *शार्ङ्गे च* एतावेव शब्दौ प्रस्तावमध्ये पदगीतौ *ब्रह्मयुजोभारद्वाजे* ब्र-

निधनेकाण्वे मर्त्तोयोयꣳसहोतायां कमश्वेऽश्वायंतो-भित्वाशूरायांकण्वतरेऽस्येदिंद्रश्चाभित्वापूर्वायाꣳ सु-ष्टुतयोवषट्तायांबृहति रुषउग्रस्यपृतइत्यत्र वाजीये दिव्योरथंतरबृहति राधस्तभोर्वीके विधतोभद्राइंद्रा-याꣳसौभरे भरमाणोभ्याभिह्रियौधे मृजानःसवाज्य-क्षायांबोधीये बोधीये ॥ ४ ॥

---

ह्मयुजोहरय इति भारद्वाजे उद्गीथमध्ये पद्गीतः *पुरांदर्मआ-मद्रैरित्यत्राभिनिधनेकाण्वे* पुरांदर्मोअपामजइति उद्गीथमध्ये अभिनिधने काण्वे पद्गीतः *मर्तोयोयꣳसहोतायां कमश्वे* साकमश्वे अयꣳसहोतायां मर्तोयोअस्मा इति उद्गीथमध्ये पद्गीतः *अश्वायन्तोभित्वाशूरायाकण्वतरे* कण्वरथन्तरे क्षौ-द्रे अभित्वाशूर इति तृतीयायां अश्वायन्त इति उद्गीथमध्ये पद्गीतः *अस्येदिन्द्रश्चाभित्वापूर्वायाम्* चशब्दात् कण्व-रथन्तरं एवभित्वापूर्वद्वितीयायां अस्येदिन्द्रे इति उद्गीथमध्ये पद्गीतः । *सुष्टुतयोवषट्तायां बृहति* बृहतिवर्द्धचुत्वा सुष्टुत-य इति उद्गीथमध्ये पद्गीतः । *रुषउग्रस्यतइत्यत्र वाजीये *रा-योवाजीये आछाद्यामरुष इति उद्गीथमध्ये पद्गीतः । *दिव्यो-रथन्तरबृहति* रथन्तरबृहति द्वितीयायां नत्वावां अन्योदिव्य इति उद्गीथमध्ये पद्गीतः *राधस्तन्नोंवीके* वींकेराधस्तन्न इति उद्गी-थमध्ये पद्गीतः *विधाताभद्रा इन्द्रायां सौभरे* सौभरेभद्रा इन्द्रा-यां यो अस्य कामं विधत्त इति उद्गीथमध्ये पद्गीतः *भरमाणो भ्यभिह्रियौ धे *यौधाजये अभ्यभिह्श्रवसायां शर्याभिर्नभरमाण इति उपद्रवमध्ये पद्गीतः *मृजानः सवाज्यक्षायां बोधीयेबोधीये* जरामध्येसवाज्यक्षायांअद्रिर्मृजान इति प्रतिहारमध्ये पद्गीतः ।

आकारोत्त्वं पाशब्दःप्रकाण्यायां पार्थवाराहकुत्सरथीयेष्विन्द्रायेंदावितिक्रौंचे पूर्वयोः स्तोत्रीययोर्वाहायिस्तोभेप्रत्यये जसावैरवमनसे वृधाबृहद्धारे पूर्वथाकण्वतरे द्वितासुज्ञाने दिवआप्रत्नंपीयूषमित्यत्रजयामहीयवोत्सेधेषू चैनेंटनएकारें प्रत्यये आर्यः कालेय आसाद्वतीयोत्तमेजेतानामेंधे हव्याविशीय इ-

संध्यगीतपदगीतंसमाप्तम् ॥

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये द्वितीयस्य चतुर्थी कण्डिका समाप्ता ॥

*आकारोऽत्वं* अतः परमत्वं वर्त्तिष्यते आकारोयेषु सामसु अकारो भवति तान्युच्चारयिष्यामः *पाशब्दः प्रकाण्यायां पार्थवाराहकुत्सरथीयेषु* शुचिबन्धुः पावक इति पाशब्दः पशब्दत्त्वमापद्यते एतेषु सामसु *इन्द्रायेन्दावितिक्रौंचे पूर्वयोः स्तोत्रीययोर्वाहायिस्तोभे प्रत्यये*इन्द्रायेन्दायां क्रौंचे पूर्वयोः स्तोत्रीययोर्वाहायिस्तोभे प्रत्यये अकारः अत्त्वमापद्यते अर्कस्य योनाइ अवाहाइ संत्वामृजन्ताहि अवाहायि *जसौवश्वमनसे* *इन्दोधाराभिरोजसा आकारोअत्वमापद्यते *वृधाबृहद्धारे* महान्महीऋतावृधा अत्राकारस्य अत्वापत्तिः *पूर्वथाकण्वतरे* कण्वरथन्तरे अनुष्टुवन्नि पूर्वथेतिअत्वापत्तिः *द्वितासुज्ञाने* सुज्ञाने विश्वापरिमियाभुवदधद्वितेति अत्वं । *दिवआप्रत्नं पीयूषमित्यत्र जयामहीयवोत्सेधेषु* प्रत्नंपीयूषमित्यत्र महोगाहादिवआकारस्य अत्वापत्तिः । *उच्चैनेडतएकारेप्रत्यये* एडतेउच्चाएनाएकारे प्रत्यये अत्वापत्तिः । *आर्यः कालेये*कालेये यस्यायं विश्वआर्यइति आकारस्य अत्वं । *आसाद्वतीयोत्तमे* सनोदूरा-

न्द्रातोकावार्षाहरेर्गीथेभ्यासेप्रत्यये दुहासखामत्स्वे-
प्रत्यये वैराज आःकारोत्वं मदाः सुतासोमायां बृह-
द्रथन्तरयोः स्तावे तमाः श्यावे क्षाश्वाउवायांप्रत्यये
नित्यवत्साती षंगासिमास्विकारोत्वमिवोत्सेधे दुहा-
नायां प्रतीनिद्धिहिकादेव्ये अर्षसिकण्वतरेडिन

---

खासाच । अत्र अत्वं आसाचेति । *जेतानार्मेधे* जेतारम-
पराजितमिति आकारोऽत्वं *हव्याविशीये* स्वासु विशीयेह-
व्यान्यैरयेतिआकारोऽत्वं *इन्द्रातोकावार्षाहरे गीथेऽभ्यासे प्र-
त्यये* वार्षा हरे अप्साइन्द्राय इषन्तोकाय उद्गीथे अभ्या-
से प्रत्यये आकारस्य अत्वं *दुहासखामात्स्वेप्रत्ययेवैराजे* म-
हावैराजदुहासखामत्स्वशब्दे प्रत्यये अत्वं इहदुहमत्स्वा *आः-
कारोऽत्वं* इदानीमाःकारस्यात्वमुच्यते, *मदाःसुतासो-
मायां बृहद्रथन्तरयोः स्तावे* बृहद्रथन्तरयोर्देवागछंतुवोमदाइति-
प्रस्तावे अत्वं अहोइदआयद्दहतीदश्वा रथन्तरे । *तमाः-
श्यावे* श्यावाश्वे सुतासोमधुमत्तमाइतिप्रस्तावे आःकारोत्वं ।
*क्षाश्वाउवायां प्रत्यये नित्यवत्सतीषंगासिमासु *सोमोदुग्धाभि-
रक्षाइति अत्रआउवायां प्रत्ययभूतायां आकारोत्वं नित्यवत् सा-
तीषंगीसमासु *इकारोत्वं* अतःपरं इकारस्यात्वं वर्त्तिष्य-
ते । इत्रोत्सेधे दुहानायां उत्सेधे दुहानायां शक्नुनाइवेति
इकारस्यात्वं *प्रतीनिद्धिहिकादेव्ये *द्विर्हिंकारे वामदेव्ये त्वंवृ-
त्राणिहंस्यप्रतीनि इकारोत्वं *अर्षसिकण्वतरे *कण्वरथन्तरे
मृज्यमानायां अभ्यर्षसीतिइकारोत्वं *डिनउत्तरयोरास्तोभेप्रत्यये
*शैखण्डिने उत्तरयोः स्तोत्रीययोः आकारे स्तोभे प्रत्यये
इकारोत्वं । सप्तानियोनौ कलशेषु सीदति पतिर्विश्वस्य भु-

उस्सयोरास्तोभे प्रत्यय ओकरोत्वं नदंवउंस॰ स्तोभ
ॐस्तोभे च महामिदं येकारौकारयोरत्वमोष्ठ्ये महे-
ङ्गीये: कारोत्वं नोअर्षसिपुमानायाऽ साप्तमिकात्रि-
णिधनायास्ययोर्यौधाजये च वृषो अचिक्रायां च
त्रिणिधने ऽयं पूषायां च क्रौंचे वश्च बृहतिस्तावे

---

वनस्य राजसि ❋ओकारोत्वं ❋अतःपरमोकारस्यात्वमुच्यते ।
❋नदंवऽसं॰स्तोभे❋स॰स्तोभेनदंवन्नुदतीनामितिऽकारोत्वं नदं-
वोअदती २ नां ❋ओस्तोभे च महामिन्दोनूनोरायें महामिद्-
न्नुहा २३ न्नुहा १ सत्रासाहीये च ❋एकारौकारयोर-
त्वमौष्ठ्ये ❋एकारौकारयोरत्वं ओष्ठ्ये प्रत्यये उदाहरणानि
आहर्यतो अर्जुनो अक्तोद्रिर्हिंकारे वामदेव्ये अध्वर्योएडलौप-
र्णैधारया ऊर्द्धारयिष्ठे एवमादीनि ❋महेङ्गीये ❋यज्ञायज्ञीये य-
त्तेधीती॰सुमतिमावृणीमहे । ❋अःकारोत्वं ❋अतःअः-
कारस्य अत्वमापद्यते इत्यधिकारार्थम् ❋नो अर्षसिपुना-
नाया॰साप्तमिकत्रिणिधनायास्ययोः ❋अपोवसानः साप्तमिके
आयास्ये त्रिणिधनायास्ये च अःकारः सविसर्गः अत्वमा-
पद्यते ❋यौधाजये च ❋अपोवसानः अत्वमापद्यते ❋वृषो
अचिक्रायां च त्रिणिधने ❋त्रिणिधनायास्ये वृषो अचिक्रायां
च गोभिरंजान इति अःकारोत्वं ❋अयं पूषायां च क्रौंचे❋
अयं पूषायां च मध्ये निधने क्रौंचे सोमः पुनानो अ-
र्षसीति अःकारोत्वं ❋वश्च बृहतिस्तावे ❋बृहतिप्रस्तावे अ-
क्षरसंसर्ग अयं पूषातृतीयायां पकारे प्रत्यये अःकारोत्वं
परउत्सेधे दुहानायां घृणातपन्तमातिसूर्यं पर इति अःकारोत्वं

पर उत्सेधे दुहानायां पुरोमत्स्वे प्रत्यये वैराजे पुरुषः शब्दः प्रथमः स्वरोऽव्याहृतिषु कामेच सर्वासु मद्भियरुहशब्दामध्यमे विकल्पे ॥ ५ ॥

वृद्धमृवर्णंऽसर्वमार्भवति षकारस्पर्शयोः प्रत्यययोर्घान्ताः का ३२३ ष्णांका ३२३ ढी एवंजातीयानि तृकारस्तु न सर्वेषु स्पर्शेष्वार्भवति यथायोजा

---

*पुरोमात्स्वे प्रत्यये वैराजे *पुरःशब्दो अःकारःमात्स्वे प्रत्यये अत्वमापद्यते *पुरुषशब्दः प्रथमस्वरोऽव्याहृतिषु *व्याहृतिषु पुरुषशब्दः प्रथमस्वरे अःकारोत्वं भूर्भुवःस्वःसत्यं पुरुष इति पञ्च व्याहृतयः *कामे च सर्वासु मदभियरुहशब्दा मध्यमे विकल्पे *निधनकामेच मदाभियरुह एतेषु अःकारः अत्वमापद्यते ।

अत्वं परिसमाप्तम् ।

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये द्वितीयस्य पञ्चमी कण्डिका समाप्ता ।

---

*वृद्धमृवर्णंऽसर्वमार्भवतिषकारस्पर्शयोः प्रत्ययोः घान्ताः का३२३ष्णांका ३२३ढी ३३एवं जातीयानि*इदानीमार्भावोवर्त्तिष्यते ऋवर्णे वृद्धं षकारस्पर्शयोः प्रत्ययोः ककारादिमकारान्ताः स्पर्शास्तेषु प्रत्ययेषु सर्वमार्भवति । यथोदाहृतं *तृकारस्तु न सर्वेषु स्पर्शेष्वार्भवति। यथा योजा ३२४ रितृ ३ व्योमघवा ओतृ ३२३४ पाव *पूर्वलक्षणेन सर्वव्यंजनावस्थितस्य ऋकारस्य वृद्धस्य आर्भावप्राप्तस्य तृकारस्थितस्य प्रतिषेधः

२३४ रितृभ्योमघवाओतृ ३१३४ पा ३ तृकारस्त-षयोः प्रत्यययोराभवति ता ३३ त्तायामधिरो तार्षाणा ३२३४ ऋगृकारोहकारेपृकाराश्निकारेशङ्गा ३१३ ईपा ३ रुचदुषसः पार्श्निरग्रा३या३१रयामे चायंगौरिति न-कृश्वोनेप्रत्यय उक्तस्त्वभ्यासादौ व्यंजनलोपः श्वो-नका ३२ श्वोनका ३२ यदुक्तंपुरस्तात्षकारस्पर्शयोः प्रत्यययोराभवतीतितत्रापवादाः सस्तृग्मवावृधाच-नार्मेधे चक्रमाशात्त्य एतदेवोदाहरणं यूथादानायां कौल्मकण्वबृहतोः संगृभात् न इत्यत्राकूपारे मर्मृ-

*तृकारस्तषयोः प्रत्यययोराभवति तार्त्तायामधिरोता ३ र्षा ३ णा ३३३ऋ*।किं सर्वत्रैव तृकारस्य अनाभावः।? न, किं तर्हि? तकारषकारयोः प्रत्यययोराभावः यथोदाहृतं *गृकारोहकारे पृकाराश्निकारेशङ्गा ३ ईपा ३ रुचद्षसः पा ३ श्निरिग्रा ३ या ३३ यामेचायङ्गौरितिनकृश्वोनेप्रत्यये *सहोदैर्घतमसे नकृकारः श्वश्वोनेप्रत्ययेआभवति *उक्तस्त्वभ्यासादौ व्यंजनलोपः श्वो-नका ३२ श्वोनका *प्रसंगादिदमुच्यते । वक्ष्यत्युपरिष्टात् व्य-ञ्जनमपराङ्गविरामे लुप्यते ऽभ्यासे चेति तदत्राभ्यासप्रत्ययस्य रे-फस्य लोपः *यदुक्तं पुरस्तात्षकारस्पर्शयोः प्रत्यययोराभवती-तितत्रापवादाः *सस्तृग्मेवावृधाः॰ नार्मेधे *उपत्वाकाम इ मह-सस्तृग्मेहवावृधा॰संनार्मेधेतयोरनाभावः *चक्रमाशात्त्ये *शात्त्ये गौरीविते चक्रमासत्पराधसइत्यनाभावः *एतदेवोदाहरणं यू-थादानायां कौल्मकण्वबृहतोः *आपुरन्दरश्चक्रमेतिअनाभावः *संगृभातून इत्यत्राकूपारे *राज्याकूपारोचित्रंग्राभ॰संगृभेत्यना-भावः *मर्मृत्वासु दैर्घे *त्वासु दैर्घश्रवसे मर्मृज्यन्तेदेवयव इति प्रतिहारे अनाभावः *एतदेवोदाहरणमभिक्रन्दायां धेनुव-

स्वासुदैर्ग्घे एतदेवोदाहरणमभिक्रंदायां धेनुवरुण-
योर्गिरस्तइंदायां च सःंहिते नभूप्रसुन्वानायां गौ-
तमसाध्रश्यावाश्वौदलाकूपारदासवैश्वामित्रस्वारकौ-
त्सकरावतरदोहतरेषु नृभिः प्रत्नःंसधस्थमित्यत्रैडु-
यास्यगोगङ्गीयिषेधाभीशाष्कारसोमवरुणनमतरजंभे-
ष्वेतदेवोदाहरणमभिसोमाध्यास्याःंहदुत्थाग्नेस्त्रिणिध-
नहन्मनेषु धत्तायां ङ्गीयकावाभिक्रन्देष्ववद्यु-
तानायां च तमसोर्के ककूतंतेमदायाःंहारिभर-
वारेष्वेतदेवोदाहरणमयंपुनानायां ङ्गीये तंत्वामदायां

---

रुणयोः *अभिक्रन्दायांमर्मृजानोविभिः सिन्धुभिर्वृषेतिमरुतान्धे-
नुवरुणसाम्नोरनाभावः *गिरस्तइन्द्रायां च सःंहिते *गिरस्त-
इन्द्रायांसःंहिते मर्मृज्यन्ते अपश्च्युवइत्यनाभावः *नभूप्रसुन्वा-
नायां गौतमसाध्रश्यावाश्वौदलाकूपारदासवैश्वामित्रस्वारकौ-
त्सकण्वतरदोहतरेषु *प्रसुन्वानायां हतामरवंनभूगव इति गौत-
मसाध्रश्यावाश्वौदलाकूपारदैवोदासवैश्वामित्रस्वारकौत्सकण्वतरा—
ज्यदोहरथन्तरेषु अनाभावः *नृभिः प्रत्नःंमधस्थमित्यत्रैडया-
स्यगौङ्गङ्गीयषेधाभीशाष्कारसौमवरुणनमतरजम्भेषु *नृभिर्द्धो-
तोविचक्षणइस्येतेषुसमासुअनाभावः । *एतदेवोदाहरणमभिसो-
माध्यास्यायाःंहदुक्थाग्नेस्त्रिणिधनहन्मनेषु *नृभिर्येमाणोहर्यतोवि-
चक्षणइति बार्हदुक्थादिष्वनाभावः *धत्तायां ङ्गीयकावाभिक्र-
न्देषु *धत्तायां दक्षोदेवानामनुमाद्योनृभिरितिङ्गीयकाववासिष्ठाभि-
क्रन्देषु अनाभावः *अवद्युतानायां च तमसोर्के *दीर्घतम-
सोर्केअवद्युतानायां नृभिर्येमाणः कोश आहिरण्यय इत्यनाभा-
वः *ककूतं ते मदायाःंहारिभरवारेषु *उलोकक्रन्नुमद्रिव
इति हारिवर्णसौभरवारवन्तीयेष्वनाभावः *एतदेवोदाहरणमय

च सꣳहिते प्रोषुवत्सासुच ॥ ६ ॥

समृत्रैशोके वृक्तवर्यंघत्वायामभिनिधने काण्वे वृ-
ष्णिर्यत्सानोर्वꣳशीग्र इवोपदगुपत्वाजावारतृतीयाया-
मतदेवोदाहरणमयꣳसूर्यायामामहीयवबोधीयर्षभाव-
पावमानाशुमार्गीसौम्यैटतस्राकेघृषिकृच्छिशुदेव्याद्ध-
ज्योतिषेषु तस्रभिः पाहिरौरवे स्यपुरुकृच्छग्व्यूहारमान-

---

पुनानायांज्ञीये *अयंपुनानायां यज्ञायज्ञीये अयꣳसिन्धुभ्योअ-
भवदुलोकहृदित्यनाभांवः । *तन्त्वामदायां च सꣳहिते*तन्त्वा-
मदायां सꣳहिते उलोककृन्तुमीमहृ इत्यनाभावः *प्रोषु वत्सासु
च *प्रोषुनित्यवत्सासु अभीकेचिदुलोककृदित्यनाभांवः ।

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये द्वितीयस्य
षष्ठी कण्डिका समाप्ता ॥

*समृत्रैशोके *त्रैशोके अपिकर्णेतर स्विनः समृ-
कभिरित्यनाभांवः *वृक्तवर्यंघत्वायामभिनिधने काण्वे
*आपोनवृक्तबर्हिषइत्यभिनिधने काण्वे अनाभांवः । *वृष्णि-
र्यत्सानोर्वꣳशीये* उद्वꣳशीये यूथेनवृष्णिरेजतेइति अनाभा-
वः *इवोपदगुपत्वाजावारतृतीयायाम *भद्रासूर्यइवोपदगिति-
वारवन्तीयेऽनाभांवः *एतद्देवोदाहरणमयꣳसूर्यायामामहीयव-
बोधीयर्षभपावमानाशुमार्गीसौम्यैटतस्राकेषु *अयꣳसूर्यइवोपदगि-
तिएतेषुनामस्वनाभांवः *कृषिकृच्छिशुंदेव्योद्वज्योतिषेषु* कृषि-
मनायकृषिकृदितिवामदेव्येउद्वद्वागेवैश्वज्योतिषेष्वनाभांवः । *त
स्रभिः पाहिरौरवे* पाहिचतस्राभिरितिरौरवेऽनाभांवः *अस्य
पुरुकृच्छग्व्यूहारमानवयोः*पौरोअश्वस्यपुरुकृदितिहारायणपूर्वेमा-

वयो रुरुक्रुदुकुवित्सुनायां बोधीये पृथिर्वीप्रदैंय्यंते बृहति च यज्ञायथाया मृधक्सोमदविज्ञीये ऽवृद्धमथार्भवाति षभेथिवी धृष्णुवृष्णि वृषन्वारे मृत्यधेनौ कृण्वते क्रौञ्च मृज्यकण्वतरेकृंतच्छकुनिमार्ज्यमानः सुहस्तियाशेनिर्गाअक्रा ए ३२ तंदो ३ तृंपायामृवर्णप्राप्तंरेफः प्रथमस्वरायां वृद्धायामपदिश्यतेत्रा २३३ पा ३३ रथतंरे च पूर्वदेव्यहद्याग्नेययोर्ऋवर्णे प्रासमकारः

---

नवयोरनार्भावः *उरुक्रुदुकुवित्सुनायां बोधीये *क्रुवित्सुनायां जराबोधीये उरुक्रुदुरुणस्कृधीत्यनार्भावः *पृथिर्वीप्रदैंय्यन्ते *अभिनिधेने काण्वे अनुमातरंपृथिवीमित्यनार्भावः *बृहति च यज्ञायथायां *यज्ञायथायां बृहति तत्पृथिवीमित्यनार्भावः *ऋधक्सोमदविज्ञीये *दविद्युतत्पारुचेतियज्ञायज्ञीये तृतीयायामक्षरसंसर्गप्रस्तावे ऋकारस्यानार्भावः *अवृद्धमप्यार्भवाति *अवृद्धस्याप्यार्भाव उपदिश्यते* षभे थिवी *शाकरर्षभे पृथिवी चाविजाभ्रिष इत्यार्भावः *धृष्णुवृष्णि* शतानीकेव प्रजिगातिधृष्णुवृद्धस्यार्भावः *वृषन्वारे* सरूपवृषन्नितिवारवंतीये आर्भावः *मृत्यधेनौ* मरुतां धेनौ ते अस्य सन्तु केतवेमृत्यवआर्भावः *कृण्वते क्रौंचे* अयं पूषायां क्रौंचे सोमासः कृण्वत इत्यार्भावः *मृज्यकृण्वतरेकृन्तच्छकुनिमार्ज्यमानः सुहस्तियाशेनिर्गाअक्राए ३१ तंदो३ *अवृद्धमप्यार्भवतीतिप्रमाणंकृत्वाप्रदर्शनंकृतम् *तृंपायामृवर्णप्राप्तंरेफः प्रथमस्वरायां वृद्धायामुपदिश्यतेत्रां ३३२ पा ३३ *आर्भावतृंपाव्यश्नुहीति अवतृंकारस्तपयोरार्भवतीतिऋवर्णमेव प्राप्तं वचनात्प्रथमस्वरायांवृद्धायां रेफोत्पत्तिरुपदिश्यते यथोदाहृतं *रथन्तरे च* रथन्तरे च एत-

क्रियतेना३यणर्वन् ॥ ७ ॥

**ऋचि प्रश्लिष्टाः स्वरसन्धयः पादमध्ये साम्नि विवृता ये तान्वक्ष्यामो मह्वस इमा उवायां वारदेव्यरथबृहत्सु श्रुध्ये तु प्रश्लेषोभीन्द्रमभिवायुमि-**

देव व्याख्यातम् । *ऋत्वन्देव्यहदाग्नेययोर्ऋत्वर्णप्राप्तमकारः क्रियतेना ३ यर्णवन् *तमग्निमस्तेत्रसवोन्पृणवन्निति वामदेव्ये-बृहदाग्नेययोरद्धत्वादकार एव प्राप्तो वचनादकारः क्रियते यथो-दाहृतम् ॥

आर्भावः समाप्तः ।

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये द्वितीयस्य सप्तमी कण्डिका समाप्ता ॥

*ऋचि प्रश्लिष्टाः स्वरसन्धयः पादमध्ये *ऋग्विषये पादमध्ये स्वरसन्धिर्यत्र भवति सोऽस्य(रूप)सन्धिना,यथा अग्निमीडिष्वात्रभे-महेव नत्वाअद्रिवइति तथादित्यव्रते वयंएवं यत्र स्वरयोरेकीभावः क्रियते स प्रश्लेष उच्यते तथा ऽस्यन्तलुप्तसन्धिना यत्रस्वरस्य लोपः क्रियते स च प्रश्लेषः । यथापादोऽस्यसर्वाभूतानि, सोय-मनेन सूत्रेण सिद्धोपन्यासः क्रियते विशेषविवक्षया *साम्नि विवृता ये तान्वक्ष्यामः *एवं पूर्वलक्षणेन पादमध्ये संश्लिष्टा ये सामविषये विश्लिष्टा भवन्ति तानुच्चारयिष्यामः *मह्व-वसइमाउवयांवारदेव्यरथबृहत्से *अयंवामह्वसे इतिवारवं-तीयादिषु विश्लेषः *श्रुध्ये तु प्रश्लेष*: एष एवशब्दः श्रुध्ये प्र-श्लिष्यते *अभीन्द्रमभिवायुमिसत्रपार्थे* अभिवायुं वीसर्षागृ-णान इति पार्थे अभीन्द्रवृषणमिति विश्लेषः *केतवः स्वासु मरुतां* स्वासु मरुतां धेनौ ते अस्य सन्तु केतवो मृसव इति विश्लेषः*

स्यत्र पार्थे केतवः स्वासु महता गर्भोमहत्त्तत्सोमायांऽसर्वत्र छन्दसि तु प्रश्लेषः प्रसुन्वानायाऽसर्वत्र पवस्वयस्ते मदायाऽसर्वत्र सोमसामसाहीयशांमदेषु प्रश्लेषः पुरोनःसर्वत्र माशिः माशिवासः सर्वत्र श्वाद्रिर्नार्वाचपिबासोमायामृषभे प्रस्मवाजेषुनः सर्वत्र रवोद्गीथे तु प्रश्लेषो नोअविभिः सुषावसोमायाऽसर्वत्राष्टादऽष्ट्राकंपुष्यसंकृतियशःसु प्रश्लेषः ॥ ८ ॥

*गर्भोमहत्त्तत्सोमायां सर्वत्र* महत्त्तत्सोमायां अपांयद्गर्भोवृणीतेतिसर्वसामसु विश्लेषः *छन्दसि तु प्रश्लेषः* वेदेतु प्रश्लेषः छन्दःशब्देन वेद उच्यते *प्रसुन्वानायां सर्वत्र* प्रसुन्वानायांधसइति सर्वसामसु विश्लेषः *पवस्वयस्ते मदायाऽसर्वत्र* यस्ते मदायां तेनापवस्वांधसेतिसर्वविश्लेषः *सोमसामसाहीयशांमदेषु प्रश्लेषः* तेनापवस्वांधसेतिसोमसामादिषु प्रश्लेषः *पुरोनः सर्वत्र* प्रेद्धोअग्नेदीदिहीति पुरोनोजस्रयेतिसर्वत्र विश्लेषः *माशिवासः सर्वत्र*। माशिवासोअवक्रमुरितिसर्वसामसु विश्लिष्यते *श्वाद्रिर्नार्वाचपिबासोमायामृषभे* पिबासोमायां वैराजर्षभे हर्यश्वाद्रिः सूयतोनार्वा इति विश्लेषः *प्रस्मवाजेषु नः सर्वत्र* प्रस्मवाजेषुनोवेति सर्वत्र प्रश्लेषः। *रवोद्गीथे तु प्रश्लेषः* एष एव शब्दो रौरवोद्गीथे प्रश्लिष्यते *नोअविभिः सुषावसोमायाऽसर्वत्र* सुषावसोमायां नूनं पुनानो अविभिरितिसर्वसामसु विश्लिष्यते। *आष्टादऽष्ट्राकंपुष्यसंकृतियशःसु प्रश्लेषः* एष एव शब्दः आष्टादऽष्ट्रादिषु प्रश्लिष्यते ॥ ४ ॥

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये द्वितीयस्य अष्टमी कण्डिका समाप्ता ॥ ८ ॥

सुते चित्वानवे वृद्धाच्च सर्वत्राऽऽयास्ये तु प्रश्ले-
ष उदिन्द्र त्वंऽत्येहीत्यत्र कण्वबृहतिपूर्वकल्पे स्ता-
वे च जम्भे प्रतिहारे कौल्मे स्तावे गायंतोयूथादा-
नायां कण्वबृहति जम्भे च तवाद्यायांऽसहोदैर्घम-
राययो वैराजे च स्तावे तवद्वितीयायामाभीशवद्वै-
गतयो रहस्ये च बृहत्यरुषीप्रतिष्यासूनरीद्वितीया-

---

*सुतेचित्वानवे* उत्तरे मानवे सुतेचित्वाप्सुमदाम इति विश्ले-
षः *वृद्धाच्च सर्वत्र* वृद्धात्परस्ताच्चैष एव शब्दः सर्वत्र विश्लिष्टः
*आयास्ये तु प्रश्लेषः* आयास्ये तु वृद्धात्परस्य प्रश्लेषः *उ-
दिन्द्र त्वं ह्येहीत्यत्र कण्वबृहति पूर्वकल्पे* त्वंऽह्येहित्वेरवइति
कण्वबृहति उदिन्द्राश्वमिष्टय इति पूर्वकल्पे विश्लेषः *स्तावे च*
प्रस्तावे च कण्वबृहति उदिन्द्राश्वमिष्टयइति विश्लेषः *जम्भे
प्रतिहारे* बृहन्निधने वार्कजम्भे उदिन्द्राश्वमिष्टय इति प्रति-
हारे विश्लेषः *कौल्मे स्तावे* कौल्मलबर्हिषे च प्रस्तावे उदिन्द्रा-
श्वेति विश्लेषः *गायन्तोयूथादानायां कण्वबृहति* यूथादानायां
कण्वबृहति इन्द्रगायन्तोवसइति विश्लेषः *जम्भे च*वार्कजम्भे च
इन्द्रं गायन्तोवस इति विश्लेषः *तवाद्यायांऽसहोदैर्घमराययोः*
सहोदैर्घमराययोस्तवाहऽंसोमेतिअस्मिञ्छब्दे विश्लेषः *वैराजे च
स्तावे*महावैराजे प्रस्तावे आद्यायामेव तवाहऽंसोमेतिविश्लेषः
*तवद्वितीयायामाभीशवद्वैगतयोः* तवाहऽंसोमद्वितीयायां आ-
भीशवद्वैगतयोस्तवाहंनक्तमुतसोमेतिविश्लेषः *रहस्ये च बृहति*
तवाहंसोमेति द्वितीयायां तवाहंनक्तेति विश्लेषः *अरुषीप्र-
तिष्यासूनरीद्वितीयायां बोधीये* जराबोधीये प्रतिष्यासूनरी-

यां बोधीये देवाजरमाते, अग्न इधीमहीत्यत्र त्वंनइ-न्द्रौपगवे चासाद्वंतीयोत्तमतृतीयायां मापप्रथोभेय-दिंद्रायाꣳश्येने स्यार्चतोवैराजर्षभे दैवांजसाबृहति महीनधारागोराजा च काव्ये पादांत्यात्परः स्वरोवि-कृष्यते यथानूषतावद्युतानायाꣳशाचिपूजनायंत इन्द्र-द्वितीयायां दक्षाय विधर्म्मणि गमिष्ठानसꣳस्कृतमि-त्यत्रौशन एवंजातीयानि ॥ ९ ॥

---

द्वितीयायामश्वेवचित्रारुषीति विश्लेषः *देवा जरमा ते अग्न इ-धीमहीत्यत्र* द्युमन्तं देवाजरमिति आते अग्न इधीमहीत्यत्र विश्लेषः *त्वन्नइन्द्रौपगवे च* उत्तरे औपगवे च त्वन्न इन्द्राभ-रेति विश्लेषः *आसाद्वंतीयोत्तमतृतीयायाम्* उत्तरे वारवं-तीये स्वासु तृचे उत्तमायां सनोदूराच्चासाच्चेति विश्लेषः *आपप्राथोभे यदिद्रायाꣳश्येने* उभेयदिन्द्रायां श्येने आप-प्राथोषा इवेति विश्लेषः *स्यार्चतोवैराजर्षभे* बोधा-विप्रस्यार्चतोमनीषा इति विश्लेषः *देवाजसा बृहति* त्व-मग्ने बृहति पथश्च देवांजसेति विश्लेषः *महीनधारागोराजा च काव्ये* अजकाव्ये महीनधारास्वन्ध अग्नेगोराजाध्यस्तविष्य-त इति च विश्लिष्टौ *पादान्त्यात्परः स्वरोविकृष्यते* पा-दमध्ये स्वरसन्धिविश्लेष उक्तः इदानीं पादान्ते स्वरयोर्विश्लेष उच्यते *यथानूषतावद्युतानायाम्* शाचिपूजनायन्त इन्द्राद्वि-तीयायां दक्षाय विधर्मणि गमिष्ठा नसꣳस्कृतमित्यत्रौशन एवं जातीयानि *पादान्त्यात्परः स्वरोविकृष्यत इत्यत्रैतान्युदाहरणानि ॥

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये द्वितीयस्य नवमी कण्डिका समाप्ता ॥ ९ ॥

अथापवादाः प्रश्लिष्टा अंशोरित्यस्य शब्दस्या-वृद्धात्परस्य प्रश्लेषः सर्वत्रेह न यदिन्द्रचित्रायां व-सिष्ठप्रियषंगयो र्दिवस्पदेतयोष्पवित्रायां ज्ञीये मो-षुत्वापार्श्वे श्रुधिशब्दोऽभ्यासे धियोग्नेभरामेध्माया-मंते जिषुसन्तानिनि त्वचिसुष्वाणायामांधांगवेंधस स्तं-वोदस्माद्यायामाथर्वणसौभरयोः प्रत्यस्मैतृतीयायां च रथंतरे ऽवासृजोरातयइत्येतौशब्दौ प्रोषु वत्सा-

---

पादान्त्यात्परः स्वरोविकृष्यत इत्यस्यापवादः *अथापवा-दाः प्रश्लिष्टा (इति) अंशोरित्यस्य शब्दस्यावृद्धात्परस्य प्रश्ले-षः सर्वत्र* सिंधुर्न्नपिप्रेअर्णसोऽंशोः पयसेतिअवृद्धात्परस्य सर्वत्र प्रश्लेषः द्विहिंकारादिषु *इह न यदिन्द्रचित्रायां वसिष्ठ-प्रियषङ्गयोः* यदिन्द्रचित्रायां इह नास्तित्वादातमद्रिव इति वसि-ष्ठप्रियातीषङ्गयोः प्रश्लेषः *दिवस्पदे तयोष्पवित्रायां ज्ञीये* यज्ञायज्ञीये दिवस्पदे अर्वन्तो अस्य तन्तवोव्यस्थिरन्निति प्रश्लेषः *मोषुत्वापार्श्वे श्रुधिशब्दोऽभ्यासे* मोषुत्वायां गायत्रपार्श्वे इह वा सन्तु पश्रुधीमेहितेब्रह्मकृत इत्यभ्यासविषये प्रश्लेषः *धियोऽग्नेभरामेध्मायामन्ते* समन्तेभरामेध्मायां जीवातवे प्र-तरा साधया धियोग्ने सख्ये इति प्रश्लेषः *जिषुसंतनिनि* सन्तानिनि तमिन्महत्स्वाजिषूतिमर्भेत इति प्रश्लेषः *त्वचि सुष्वाणायामान्धीगवे* त्वधीत्वमस्मभ्यमभित इति प्रश्लेषः *अन्धसस्तंवोदस्माद्यायामाथर्वणसौभरयोः* तंवोदस्माद्यायां अन्धसोभिवत्सनस्वसेष्विति प्रश्लेषः *प्रत्यस्मै तृतीयायां च र-थन्तरे *एष एव शब्दः प्रत्यस्मैतृतीयायां रथन्तरे इदन्धसोध्व-र्योप्रभरासुत मिति प्रश्लेषः *अवासृजोऽरातयइत्येतौ शब्दौ प्रो-

सु युजाणिरित्सिषायाॐरौरवे बोधयोमहेनायां वा-
जीये डितेवसोत्रै ककुभे तमोर्षायां वर्णेऽर्चतप्रिये
ब्रह्मयुजाकक्षे धसोद्रयोवात्सप्रे नदीधिमःश्राय-
न्तायाॐसौभरे सैन्योसिबार्हद्गिरसंतनिनो वाहनो-
ग्नेविवस्वद्वितीयायाॐश्रुध्ये वृष्णउग्रस्यत इत्यत्र वा-
जीये धारयासेधे धियोसेधे जमवर्त्तेचा ऽग्नेतमद्यकमश्वे

---

षु वत्सासु *मोषु वत्सासु अत्रासृजोधराच इति अ-
रातयोर्योनः सन्तइति च प्रश्लेषः *युजाणिरित्सिषाया
ॐरौरवे* रौरवे तरणिरित्सिषायां वाजंपुरन्ध्यायुजावइन्द्रमि-
ति प्रश्लेषः *बोधयोमहेनायां वाजीये* रायोवाजीये महे-
नायां योषोराय इति प्रश्लेषः *डितेवसोत्रैककुभे* त्रैककुभे
मंडितेन्द्रब्रवीमि ते व इति च सोऽस्मान्कदाचनेति च प्रश्लिष्टौ
*तमोर्षायां वर्णे* रहस्ये शाकरवर्णे सोमद्युमत्तमोभिद्रोणानीति
प्रश्लेषः *अर्चतप्रिये* वासिष्ठप्रिये इन्द्राय नूनमर्चतोत्क्थानि
चेति प्रश्लेषः *ब्रह्मयुजाकक्षे* श्रौतपक्षे यहहरीब्रह्मयुजैहह-
रेत्रेति प्रश्लेषः *धसोद्रयोवात्सप्रे* क्षौद्रे वात्सप्रे अन्धसो-
न्धस इति अद्रयोद्रयोद्रय इति च प्रश्लिष्टौ *नदीधिमः श्रायन्ता-
यां सौभरे* सौभरे नदीधिमोर्ऊर्षिरातिमिति प्रश्लेषः *सै-
न्योसिबार्हद्गिरसन्तनिनोः* बार्हद्गिरसन्तनिनोः वीरसेन्योसि-
भूरिपरादृदिरितिप्रश्लेषः *वाहनोऽग्ने विवस्वाद्वितीयायाॐश्रु-
ध्ये* दूतो असि हव्यवाहनोऽग्ने रथीरितिप्रश्लेषः *वृष्ण-
उग्रस्यत इत्यत्र वाजीये* रायोवाजीये नवजातस्य वृष्णोऽग्ने
चरन्तीति प्रश्लेषः *धारया सेधे* उत्सेधे पुनानः सोम-
धारयेति प्रश्लेषः *धियोसेधे* उत्सेधे एव अस्मांॅ अवन्तु

अथापवादाः प्रश्लिष्टा अंशोरित्यस्य शब्दस्या- वृद्धात्परस्य प्रश्लेषः सर्वत्रेह न यदिन्द्रचित्रायां व- सिष्ठप्रियषंगयो र्दिवस्पदेतयोष्पावित्रायां क्षीये मो- षुत्वापार्श्वे श्रुधिशब्दोऽभ्यासे धियोग्नेभरामेध्माया- मंते जिषुसन्तानिनि त्वचिसुष्वाणायामांधांगवेंधस स्तं- वोदस्माद्यायामाथर्वणसौभरयोः प्रत्यस्मैतृतीयायां च रथंतरे ऽवासृजोरातयइत्येतौशब्दौ प्रोषु वत्सा-

---

पादान्त्यात्परः स्वरोविकृष्यत इत्यस्यापवादः *अथापवा- दाः प्रश्लिष्टा (इति) अंशोरित्यस्य शब्दस्यावृद्धात्परस्य प्रश्ले- षः सर्वत्र* सिंधुर्नपिप्रेअर्णसोंऽशोः पयसेतिअवृद्धात्परस्य सर्वत्र प्रश्लेषः द्विहिकारादिषु *इह न यदिन्द्रचित्रायां वसिष्ठ- प्रियषङ्गयोः* यदिन्द्रचित्रायां इह नास्तित्वादातमद्रिव इति वसि- ष्ठप्रियातीषङ्गयोः प्रश्लेषः *दिवस्पदे तयोष्पवित्रायां क्षीये* यज्ञायज्ञीये दिवस्पदे अर्वन्तो अस्य तन्तवोऽव्यस्थिरन्निति प्रश्लेषः *मोषुत्वापार्श्वे श्रुधिशब्दोऽभ्यासे* मोषुत्वायां गायत्रपार्श्वे इह वा सन्तु पश्रुधीमेहितेब्रह्मकृत इत्यभ्यासविषये प्रश्लेषः *धियोऽग्नेभरामेध्मायामन्ते* समन्तेभरामेध्मायां जीवातवे प्र- तरा साधया धियोऽग्ने सख्ये इति प्रश्लेषः *जिषुसंतनिनि* सन्तानिनि तमिन्महत्स्वाजिषूतिमर्भेत इति प्रश्लेषः *त्वचि सुष्वाणायामान्धीगवे* त्वधीत्वमस्मभ्यमभित इति प्रश्लेषः *अन्धसस्तंवोदस्माद्यायामाथर्वणसौभरयोः* तंवोदस्माद्यायां अन्धसोभिवत्सन्नस्वसेष्विति प्रश्लेषः *प्रत्यस्मै तृतीयायां च र- थन्तरे *एष एव शब्दः प्रत्यस्मैतृतीयायां रथन्तरे इदन्धसोध्व- र्योप्रभरासुत पिति प्रश्लेषः *अवासृजोऽरातयइत्येतौ शब्दौ प्रो-

सु युजाणिरित्सिषायाꣳरौरवे बोधयोमहेनायां वाजीये डितेवसोत्रै ककुभे तमोर्षायां वर्णेऽर्चतप्रिये ब्रह्मयुजाकक्षे धसोद्रयोवात्सप्रे नदीधिमःश्रायन्तायाꣳसौभरे सैन्योसिवार्हद्गिरसंतनिनो वाहनोऽग्नेविवस्वद्वितीयायाꣳश्रुध्ये वृष्णउद्यस्यत इत्यत्र वाजीये धारयासेधे धियोसेधे जमवर्त्तेचा ऽग्नेतमद्यकमश्वे

---

षु वत्सासु *मोषु वत्सासु अवासृजोधराच इति अरातयोर्योनः सन्तइति च प्रश्लेषः *युजाणिरित्सिषाया ꣳरौरवे* रौरवे तरणिरित्सिषायां वाजंपुरन्ध्यायुजावइन्द्रमिति प्रश्लेषः *बोधयोमहेनायां वाजीये* रायोवाजीये महेनायां योषोराय इति प्रश्लेषः *डितेवसोत्रैककुभे* त्रैककुभे मर्डितेन्द्रब्रवीमि ते व इति च सोऽस्मान्कदाचनेति च प्रश्लिष्टौ *तमोर्षायां वर्णे* रहस्ये शाक्करवर्णे सोमद्युमत्तमोभिद्रोणानीति प्रश्लेषः *अर्चतप्रिये* वासिष्ठप्रिये इन्द्राय नूनमर्चतोत्क्थानि चेति प्रश्लेषः *ब्रह्मयुजाकक्षे* श्रौतपक्षे यद्दहरीब्रह्मयुजेहहरेत्रेति प्रश्लेषः *धसोद्रयोवात्सप्रे* क्षौद्रे वात्सप्रे अन्धसोन्धस इति अद्रयोद्रयोद्रय इति च प्रश्लिष्टौ *नदीधिमः श्रायन्तायां सौभरे* सौभरे नदीधिमोलर्विरातिमिति प्रश्लेषः *सैन्योसिवार्हद्गिरसन्तनिनोः* वार्हद्गिरसन्तनिनोः वीरसेन्योसिभूरिपरादद्दिरितिप्रश्लेषः *वाहनोऽग्ने विवस्वाद्वितीयायाꣳश्रुध्ये* दूतो असि हव्यवाहनोऽग्ने रथीरितिप्रश्लेषः *वृष्णउद्यस्यत इत्यत्र वाजीये* रायोवाजीये नवजातस्य वृष्णोऽग्रे चरन्तीति प्रश्लेषः *धारया सेधे* उत्सेधे पुनानः सोमधारयेति प्रश्लेषः *धियोसेधे* उत्सेधे एव अस्माꣳ अवन्तु

तताईंथदैर्घे अबस्यवोद्रै३ये अवस्यवोदै३य ॥ १० ॥

यः संयोगोयवांतः क्वचित्संकृष्टः क्वचिद्विकृष्ट-स्तत्र संकृष्टग्रहणं न्यर्यःसाहीयपर्णवर्णमित्रविलम्वेषु नैडे दि३यंज्यर्षसियशःसॐसर्पपुष्पेष्वापृछयमवृद्धॐ

---

ते धिय इति प्रश्लेषः *जमवर्त्ते च* जमदग्नेरभीवर्त्ते च अस्माॐअवन्तु ते धिय इति प्रश्लेषः *अग्ने तमद्य क-मश्वे* साकमश्वे अग्ने तमद्येति प्रश्लेषः *तताईंथो दैर्घे *त्वेसोमप्रथमायां दैर्घे तताईंथोत्सन्नकमितिप्रश्लेषः *अवस्य वोदै३ये अवस्यवोदै३ये* एदुमधोर्वान्वामदे३ये अहमाहिअवस्य वो प्रायुभिरिति प्रश्लेषः ।

प्रश्लेषविश्लैषो समाप्तौ ॥

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये द्वितीयस्य दशमी कण्डिका समाप्ता ॥ १० ॥

---

*यः संयोगोयवान्तः क्वचित्संकृष्टः क्वचिद्विकृष्टस्तत्र संकृष्ट-ग्रहणम्* यः कश्चित्संयोगोयान्तः कश्चिद्वान्तः तयोश्चोहगीतौ-कस्य चित्संकर्षः कस्यचिद्विकर्षः । तत्र सन्देहस्तन्निर्णयार्थं यत्सं-कृष्टं तदधिकृतम् । *न्यर्यः साहीयपर्णवर्णमित्रविलम्वेषु* पुना-विश्वान्यर्य इति सत्रासाहींयस्वारसौपर्णमित्रविलम्वसौपर्णेषु एतेषु सामसु न्यर्यशब्दः संकृष्टः अन्यत्र विकृष्टः।*नैडे* पूर्वसूत्रात् त्रि-ष्वपि सौपर्णेषु सङ्कर्षः प्राप्तः ऐडसौपर्णे विकर्षः *दि३यं-ज्यर्षसि यशः सॐसर्पपुष्पेषु* दुहानऊधर्दि३यं वरुणं वाज्य-र्षसीति च एतौ शब्दावेतेषु सामसु संकृष्टौ *आपृच्छ३यमवृद्धॐ-सर्वत्र* आपृच्छ३यमवृद्धं सत् सर्वसामसु संकृष्यते *अभीवर्त्ता-

सर्वत्र मदेष्वाकूलीये जिह्मंनकृन्न्यश्च ज्ञीयस्योद्गीथे विश्वाच्याश्विनोर्व्रतपर्याकूपारपुष्यमरायेषु नाभ्यासे त्वद्रयश्चैतेषु वैधनेचामराये त्वग्नयेस्वासु दैर्घैध्यमायांसूर्यस्याभिप्रियाणीत्यत्र स्वारकावज्ञीययो रेष एव शब्दः सूर्यवतीष्विनोराजद्वितीयायां चौशनेऽति-सूर्यपुष्यमरायकीर्त्येष्विन्द्रः सूर्यंस्तुचनैयकीर्त्येष्विव

---

दिषु विकृष्टं *मदेष्वाकूलीये* अस्येदिन्द्रोमदेष्वापूर्वे रोहित-कूलीये संकृष्टः* जिह्मंनकृन्न्यश्च ज्ञीयस्योद्गीथे *मखायोदीर्घ-जिह्मयं इन्दुरश्वोनकृच्य इति च यज्ञायज्ञीये उद्गीथे संकृष्टौ* विश्वाच्याश्विनो र्व्रतपर्याकूपारपुष्पमरायेषु* सोमंविश्वाच्याधि-येति एतेषु सामसु संकृष्यते। पर्याकूपार इति परित्यंहर्यतं हरिमितियस्ययोनिः *नाभ्यासे* पर्याकूपारे अभ्यासविषये विश्वाच्योति विकर्षः *त्वद्रयश्चितेषु* यज्ञायसन्त्वद्रय अश्वि-नोर्व्रतादिषु सामसु त्वशब्दः संकृष्टः *वैधने च* वैधने च सोमसाम्नि यज्ञाय संत्वद्रय इति संकृष्टः *अमराये* मराये त्वद्रयशब्दोविकृष्टः *त्वग्नये स्वासु दैर्घैध्यमायां* प्रस्तोमाय-त्वग्नय इति स्वासु दैर्घश्रवसे मध्यमायां संकृष्टः *सूर्यस्याभि-प्रियाणीत्यत्र स्वारकावज्ञीययोः* अभिप्रियाणीसत्र आसूर्यस्य बृहत इति स्वारकावे यज्ञायज्ञीये च संकृष्टः *एष एव शब्दः सूर्यवतीषु* सूर्यस्येव रश्मय एताः सूर्यवत्यः एतासु सू-र्यशब्दः संकृष्टः *इनोराजाद्वितीयायां चौशने* औशने इनोरा-जाद्वितीयायां ऊर्द्ध्वभानुंसूर्यस्य स्तभायन्निति संकर्षः *अतिसूर्य-पुष्यमरायकीर्त्येषु* तवाहंसोमतृतीयायां घृणातपन्तमतिसूर्यपर-इत्येषु सामसु सूर्यशब्दःसंकृष्टः *इन्द्रः सूर्यं स्तुचनैयकीर्त्येषु* इन्द्रः

सूर्यंकीर्त्त्यें वणमहाँ५ँअसीत्यत्र सूर्यशब्दः सर्वत्र वि-
तनैययोस्त्वाद्योविकृष्टः सूर्यें महत्तत्सोमायां वैश्व-
ज्योतिषवात्सप्रयोरामायामासूर्यं५ँसर्वत्राऽस्य प्रत्ना-
यामय५ँसूर्यशब्दः सर्वत्राऽत्रैव तृतीयायां न सू-
र्योभ्राजे सूर्यस्य नतेगिर इत्यत्र महीसूर्यः कीर्त्त्यें
स५ँसूर्यस्येहवद्रामे सूर्यावैरूपांतरिक्षयोस्त्व५ँसूर्य-
५ँसौमित्रे समुसूर्यं५ँसंतनिनि यथर्चगीते पर्वणि

---

सूर्यमरोचयदिति महादिवाकीर्त्यादिषु संकृष्टः *इव सूर्यं की-
र्त्यें* आयंत इव सूर्यमिति महादिवाकीर्त्यें संकृष्टः *वणमहाऽ-
असीत्यत्र सूर्यशब्दः सर्वत्रवितनैययोस्त्वाद्योविकृष्टः* वितनैय-
योस्त्वाद्योविकृष्टः गौरीवितनैयातिथयोराद्यः सूर्यशब्दोविकृष्टः
*सूर्ये महत्तत् सोमायां वैश्वज्योतिषवात्सप्रयोः* महत्तत्सोमायां
वैश्वज्योतिषवात्सप्रयोरजनयन्सूर्यं इतिशब्दः संकृष्टः *आमाया-
मासूर्यंऽसर्वत्र *आमासु पक्वमैरय इति आसूर्यं रोहय इति सर्वत्र
संकृष्टः *अस्य प्रत्नायामयंसूर्यशब्दः सर्वत्र* अस्यप्रत्नाद्विती-
यायामयऽसूर्य इत्रोपद्दगिति सर्वत्र संकृष्टः *अत्रैवतृतीयायां
न सूर्यो भ्राजे* अस्य प्रत्नातृतीयायामरसोमोदेवो न सूर्य
इति संकृष्टः *असूर्यस्य न ते गिर इत्यत्र* न सुष्टु-
तिमसुर्येति सर्वत्र संकृष्टः *महिसूर्यः कीर्त्यें* महादिवा-
कीर्त्यें विश्वभ्राड्भ्राजोमहीसूर्य इति संकृष्टः *संसूर्यस्येह-
वद्रामे* इहवद्रामदेव्ये संसूर्यस्य रश्मिभिरिति संकृष्टः ।
*सूर्यावैरूपान्तरिक्षयोः* नत्वावज्रिन्सहस्रं सूर्या इति पञ्च-
निधनवैरूपान्तरिक्षयोः संकृष्टः *त्वंसूर्यसौमित्रे* त्वंसूर्यमरो-
चयइति संकृष्टः *समुसूर्यंऽसन्ततिनियथर्चगीते पर्वणि* अ-

ष्वविताद्दाशे महायां ज्ञीयविशीयवारमहामित्रतरे- ष्वेल्ह्नकमश्वे त्वामिघ्यविभरे त्वायसर्वत्र ध्याभिर्नो- र्मेधे कुण्डपाय्यः सद्मने ध्योमनीन्द्रसुतायां वंशी- ये हिन्वत्यपसोद्धिहिंकारगौंगवद्वैगततरेषु ण्वतरे च पूर्वकल्पे ॥ ११ ॥

---

स्तासन्तनिसंक्षोणीसमुसूर्यमितियथर्चगीते पर्वणि संकृष्टः नि- धनस्वर इत्यर्थः *ष्वविताद्दाशे महायां ज्ञीयविशीयवारमहा- मित्रतरेषु* यज्ञायज्ञीयत्रिशोविशीयवारवन्तीयमहावैश्वामित्रर- थन्तरेषु एतेषु सामसु यज्ञायज्ञावो अत्यायां दाशे महायां भुवद्वाजेष्ववित एतेषु सामसु संकृष्टः *एह्नकमश्वे* साकमश्वे एह्नषू इति ह्नशब्दः संकृष्टः *त्वामिघ्यविभरे* त्वामिघ्यवितारं- वद्महे इति सौभरे वयमुत्वामपूर्व्य इति अन्ते त्वामिघ्य इति घ्यशब्दः संकृष्टः । *त्वायसर्वत्र* ( सौभरेत्वयमुत्वा उपत्वा- त्वामित्वा ) वास्यत्वायेतित्वायशब्दः संकृष्टः । *ध्याभिर्नो- र्मेधे* नामेधे(अधाहिमध्यमायां) वार्स्पचायध्याभिरिति ध्याशब्दः संकृष्टः *कुण्डपाय्यःसद्मने* अर्द्धसद्मने मणपात्कुण्डपाय्य इति संकृष्टः *ध्योमनीन्द्रसुतायां वंशीये* उद्वंशीये समथमे ध्यो- मनीति ध्योशब्दः संकृष्टः *हिन्वन्त्सपसोद्विहिंकारगौंगवद्वैगततरेषु ण्वतरे च पूर्वकल्पे* ( द्विहिंकारं वामदेव्यगौंगवद्वैयतरथन्तरेषु प्रसोमदेत्यायां ) तमींहिन्वन्त्सपसइतिद्विहिंकारादिषु संकृष्टः कण्वरथन्तरे च प्रसोमदेत्यायां तमिंहिन्वन्त्य इति पूर्वे विकल्पेत्स- शब्दः संकृष्टः ।

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये द्वितीयस्य एकादशी कण्डिका समाप्ता ।

ण्योस्तं त्वाधर्त्तायां॒ह्राविष्मतसन्तनिनो विं-
भाषा प्रसुन्वानाद्वितीयायां॑रथंतर इदाह्योमानवे
स्युपमा छन्दसे पूर्व्योवृषाम्रतीद्वितीयायां ज्ञीये त्वा-
माभिद॑ष्ट्रोत्तरे मर्घद्विहिंकहारभारमानोत्तररौरत-
रेषूतस्युर्वैरूपान्तरिक्षह्रस्वासु वृष्ट्ययावैरूपे हर्यश्व-

---

*ण्योस्तन्त्वाधर्त्तायां ह्राविष्मतसन्तनिनोः* वृषापवस्व-
मध्यमायां तन्त्वाधर्त्ताः रमोयाण्यो इति ण्योशब्दः
ह्राविष्मतसन्तनिनोः संकृष्यते *विभाषाप्रसुन्वानद्विती-
यायां रथन्तरे* रथन्तरे प्रसुन्वानद्वितीयायां भुजेन-
पुत्र३ण्योरितिण्योशब्दः संकृष्टो ( विकृष्टो वा एष विकृष्टः )
*इदाह्योमानवे* उत्तरे मानवे त्वामिदाह्योनर इति ह्योशब्दः
संकृष्टः *स्युपमाछन्दसे* माधुछन्दसे तवश्रवा॑स्युपइतिस्यु-
शब्दः संकृष्टः *पूर्व्यो वृषामती द्वितीयायां ज्ञीये* यज्ञा-
यज्ञीये वृषामतीद्वितीयायां मनीषिभिः पूर्व्यं इतिर्व्यशब्दः
संकृष्टः *त्वामभिद॑ष्ट्रोत्तरे* उत्तरे आष्टाद॑ष्ट्रे त्वामभि-
प्रनोनुम इति त्वाशब्दः संकृष्टः *मर्घद्विहिंकहारभारमानो-
त्तररौरतरेषु* पवन्तेमर्घमदमितिद्विहिंकारहारायणभारद्वाज उ-
त्तररौरवरथन्तरेषु एतेषु सामसु घंशब्दः संकृष्टः *उतस्यु-
र्वैरूपान्तरिक्षह्रस्वासु* पञ्चनिधनवैरूपह्रस्वावैरूप अन्तरिक्षेषु
एतेषु सामसु यद्यायं ( एतंभूमी ) उतस्तुरितिस्यशब्दोवै-
रूपादिषु संकृष्टः *वृष्ट्यावैरूपे* आपप्राथमहिनावृष्ट्ययावृष-
न्नितिपञ्चनिधनेवैरूपे मद्याव इति मध्यमायां वृष्ट्या इति
ष्ट्याशब्दः संकृष्टः *हर्यश्वपिबासोमद्वितीयायां सहोदैर्घे* स-
होदैर्घतमसे पिबासोमद्वितीयायां येन वृत्राणि हर्यश्वह॑सी-

पिबासोमद्वितीयायां सहोदैर्घे मरायेत्वाद्ययोः स्यं-
तमामराये विद्वान्मरायववैराजर्षभयो स्त्वामि-
द्भूरिहितायां मराये सहोदैर्घे त्वभ्यासो नप्त्यो-
रौर्णायववयोः परिप्रियायां मार्गीयवे च त्वंह्येत्ये-
तौ शब्दौ सौपर्णे पवित्रमत्येज्ञीये नकिष्टत्सिते
ऽसाव्यंशुः सर्वत्र न सन्तानिनि पाष्योः क्रोशे

---

इतिर्यशब्दः संकृष्टः *मरायेत्वाद्ययोः* मराये पिबासोमाद्ययोहर्य
इतिर्यशब्दः संकृष्टः यन्ते सुखात्रहर्येति येन वृत्राणीति च संकृष्टः
*स्यन्तमामराये* मरायेषु श्रुधीहवाद्यायां कृष्वादुत्रांऽस्यन्तमेति
मराये स्यंशब्दः संकृष्टः *विद्वान्मरायवैराजर्षभयोः* अ-
सुर्यस्य विद्वानिति मराये वैराजर्षभयोर्विद्वानिति द्वाशब्दः संकृष्टः
*त्वामिद्भूरिहितायां मराये* भूरिहितायां मराये भूरिमनी-
षीहवतेत्वामिदितित्वाशब्दः संकृष्टः *सहोदैर्घे त्वभ्यासः*
सहोदैर्घे श्रुधीहवान्स्यायां हवतेत्वामिति अभ्यासविषये त्वा-
शब्दः संकृष्यते *नप्त्योरौर्णायवयोः परिप्रियायां*
परिप्रियायां और्णायवयोर्वयाऽसिनप्त्योरितिप्त्योशब्दः सं-
कृष्टः *मार्गीयवे च* मार्गीयवे नप्त्योशब्दः संकृष्टः *त्वं-
ह्येत्येतौ शब्दौ सौपर्णे* स्वारसौपर्णे त्वंह्यंगदैव्येतित्वंश-
ब्दोह्यशब्दश्च संकृष्टौ *पवित्रमत्ये ज्ञीये* यज्ञायज्ञीये सोमः
पवित्रमत्येतिरेभान्निति मत्येशब्दः संकृष्टः *नकिष्टत्सिते* आसिते
इत्यस्मिन्द्रमध्यमायां नकिष्टद्रथीतर इति ष्टशब्दःसंकृष्टः *असाव्य
ंशुःसर्वत्र*असाव्यंशुर्मदायेतिव्यंशब्दः सर्वसामसु संकृष्टः *न-
सन्तानिनि* सन्तानिनि विकृष्टः *पाष्योः क्रोशे* माणाशिशु-
र्मध्यमायां पाष्यो इति ष्योशब्दः उपात्रितस्य पाष्योरिति

ष्वैरयत्रैतक्रोशवार्शेषु त्वᳫंरित्वंघां च गवाष्टेबु-सिमासु त्वं घांशुद्धीये सुहस्त्यरन्ध्रोत्तरवरुणगोष्ठा-र्कपुष्पेषु स्वानः परिस्वानायां वैदन्वतहाविष्मतरेव-तीष्वेष एव शब्दोऽक्रान्वासिष्ठे परीताध्यास्यायां चानवमेऽहनि त्वंकविर्द्वितीये दन्वते मित्राः स्वा।

---

क्रोशे संकृष्टः *ष्वैरयत्रैतक्रोशवार्शेषु* माणाशिशुर-न्सायां पृष्ठष्वैरयद्र्यिर्मिति पृष्ठष्वैशब्दस्त्रेतादिषु संकृष्टः *त्वᳫं-रित्वंघांचगवाष्टेडसिमासु* त्वांरिहन्ति त्वंघांचेति त्वचशब्दौ आंधीगवाष्टेडसिमासु संकृष्टौ *त्वंघांशुद्धीये* शुद्धाशुद्धीये त्वंघाचेति त्वंशब्दः संकृष्टः *सुहस्त्यरन्ध्रोत्तरवरुणगोष्ठार्क-पुष्पेषु* स्वारमौक्ष्णोरन्ध्रवरुणसाम्नगोष्ठअर्कश्च एतेषु सा-मसु । मृज्यमानः सुहस्त्येति स्त्यशब्दः संकृष्टः *स्वानः परिस्वानायां वैदन्वतहाविष्मतरेवतीषु* प-रिस्वानोगिरिष्ठा इति स्वाशब्दः संकृष्टः वैदन्वतहाविष्मत-रेवतीषु एतेषु सामसु परिष्वा इति स्वाशब्दः संकृष्टः *एषएवशब्दोऽक्रान्वासिष्ठे* अक्रान्समुद्रायां वासिष्ठे बृह-त्सोमो वावृधे स्वानो अद्रिभिरिति स्वाशब्दः संकृष्टः *प-रीताध्यास्यायां च* श्रीणन्त इत्यत्र परिस्वानश्चक्षस इति-स्वाशब्दः संकृष्टः सर्वसामसु *अनवमे हनि* श्रीणन्त इति नवमेऽहनि वासिष्ठे परिस्वानक्षस इति संकृष्टः स्वाशब्दः *त्वंकविर्द्वितीये दन्वते* वैदन्वते ऊहसमाम्नाये क्रमद्वितीये वैदन्वते त्वंकविरिति त्वंशब्दः संकृष्टः *मित्राः स्वानाः सर्वत्र* सोमाः पवन्तायां मित्राः स्वाना इति सर्वसामसु

October . 1922.

THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS,

NO. 298.

# पुष्पसूत्रं

सा म प्रा ति शा ख्यं

पुष्पर्षिप्रणीतम्

श्रीमदजातशत्रुकृतभाष्यसहितम् ।

काशीस्थद्राविडोपाह्व म० म० पण्डितश्रीलक्ष्मणशास्त्रिणा
संशोधितं विजयते ।

FASCICULUS II-२

*PUBLISHED & SOLD BY THE SECRETARY*,
CHOWKHAMBA SANSKRIT SERIES OFFICE, BENARES.
AGENTS:-OTTO HARRASSOWITZ, LEIPZIG:
PANDITA JYESHTHARAM MUKUNDAJI, BOMBAY:
PROBSTHAIN & CO; BOOKSELLERS LONDON.
*Printed by Jai Krishna Das Gupta,
at the Vidya Vilas Press, Benares.*

*1923.*

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा—संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तवकः—२९८

नाः सर्वत्र दध्याशिरोविते ण्याद्रिभिर्यज्ञीये त्वं मातौपगवे वरेण्यं प्रराध्यं चातीषङ्गे ऽत्योगभस्त्योः स्वः शब्दश्च ज्ञीये स्वःकावाभिक्रन्दयो रत्योर्के ओगभस्त्योः ष्वाविशे त्येते शब्दास्त्रयः शार्ङ्गे कृ-त्ण्योनुमाघोत्योगभस्त्योः स्वष्वाविशेत्येतेशब्दाः षडेषडे ॥ १२ ॥

इति षष्ठः प्रपाठकः समाप्तः ॥

---

संकृष्टः *दध्याशिरोविते* ( सामामोदध्यशिरइति ) गौरी-विते सोमाः पत्रन्तमध्यमायां दध्या इति ध्याशब्दः संकृष्टः *ण्याद्रिभिर्यज्ञीये* सुष्वाणासोण्याद्रिभिरिति यज्ञायज्ञीये संकृष्टः *त्वंमातौपगवे* औपगवे त्वंमाताशतक्रतोइति त्वशब्दः संकृष्टः *वरेण्यं प्रराध्यं चातीषङ्गे* अतीषङ्गे यन्मन्यसेवरेण्यं यत्ते-दिक्षुप्रराध्यमिति च संकृष्टौ *अत्योगभस्त्योः स्वशब्दश्च ज्ञीये* यज्ञायज्ञीये हरिः सृजानो अत्योशूरोनधत्तआयुध्यगभ-स्त्योः स्वःसिषासन्निति च संकृष्टाः *स्वःकावाभिक्रन्दयोः* स्वःसिषासन्निति स्वःशब्दः कावे वायोरभिक्रन्दे च संकृष्टः *अत्योर्के* हरिःसृजानो अत्योदीर्घतमसोर्के सशब्दः सं-कृष्टः *अत्योगभस्त्योः ष्वाविशेत्येतेशब्दाःस्त्रयःशार्ङ्गे* अत्यो-गभस्त्योः ष्वाविश इत्येते शब्दाः संकृष्टास्त्रयः शार्ङ्गे *कृत्योनु-माघोत्योगभस्त्योः स्वःष्वाविशेत्येतेशब्दाः षडष्टेडे* एते शब्दाः षडष्टेडे संकृष्टाः ।

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये द्वितीयस्य द्वादशी कण्डिका समाप्ता ।

इति द्वितीयः प्रपाठकः समाप्तः ॥

सप्तमः प्रपाठकः ।

देवेभ्यः संक्षारे नर्यः परीतायां माधुयास्यभीशरौरदंष्ट्रजंभानूपयौधद्वैगणवतरस्थानसंकृतिभर्गयशाथर्वणतरेषु नवमेत्वाहनि सर्वत्र दैर्घवर्जं विभाषारुणसाम्न्येष एव शब्दः संकृष्टो गोमन्नष्कले त्वेष्टयन्यद्ध्यभ्यालौशे तमसोर्केचाऽत्रैव तृतीयायामन्त्यः सर्वत्र न्योजसाकीर्त्यै भ्यं कीर्त्यै काशीतहाविः

*देवेभ्यः संक्षारे* इडानांसंक्षारे हिन्वन्ति सूरद्वितीयायां भ्यः शब्दः संकृष्टः *नर्यः परीतायां माधुयास्य भीशरौरदंष्ट्रजम्भानूपयोधद्वैगणवतरस्थानसंकृतिभर्गयशाथर्वणतरेषु* 'दधन्वांयोनर्य इति माधुछन्दसादिषु ऐडपास्य आभीशवरौरवदंष्ट्रोत्तरवार्षजम्भआनूपयौधाजयद्वैगतकण्वरथन्तरदेवस्थानसंकृतिभर्गयशाथर्वणरथन्तरेषु संकृष्टः *नवमेत्वाहनि सर्वत्र* नवमेऽहनि पृष्ठकौल्मलादिषु नर्य इति संकृष्टः *दैर्घवर्ज्जं* दैर्घश्रवसे तु विकृष्टोनर्यः शब्दः । *विभाषाऽरुणसाम्नि* । परीतायामेव वरुणसाम्नि नर्यः शब्दोविभाष्यते नर्यः शब्दोविकल्प्यते संकृष्टोविकृष्टो वा *एष एव शब्दः संकृष्टोगोमन्नष्कले* एष एव शब्दोगोमन्न इत्यत्रसनोहरीणां संकृष्टः *सेष्यन्यद्ध्यद्भ्यालौशे* असाविसोमायां ध्यभ्यालौशे पुनानोवारमन्येषान्यमेतेशब्दास्त्रयः संकृष्टाः *तमसोऽर्के च* दीर्घतमसोर्के च एते त्रयः शब्दाः संकृष्टाः । *अत्रैव तृतीयायामन्त्यः सर्वत्र* अस्मिन्नेवासाविसोमतृचे कविर्वेध्यायामत्यपोनमृज्य इति त्यशब्दः सर्वसामसु संकृष्टः *न्योजसाकीर्त्यै* महादिवाकीर्त्यैश्रायन्तायां वसूनि जातोजनिमान्योजसा इति न्योशब्दः सं-

ष्कृतयोः स्वꣳशब्दः सर्वासु त्वांदेवासोरीत्याप- इत्येतौ शब्दौ वैश्वमनसश्रुध्ययो रर्चंत्युद्धꣳशीयवित- योः सान्वारुहोवꣳशीये भूर्यवꣳशीयलेयावितेषु प- र्यूष्वान्धीगवसꣳस्तोभयो स्तरध्यैविते राज्येन्धीग- वदेव्ययोः सनित्यः सर्वत्राऽत्रैव तृतीयायां न्वा- ꣳशादेव्ये न्पृणवन्दक्षाप्य इत्येतौ शब्दौ मराये शे-

---

कृष्टः *भर्यकीर्त्यें* महादिवाकीर्त्यें एव बणमहाꣳअसीत्यत्र वि- भुजयोतिरदाभ्यमिति भर्यं शब्दः संकृष्टः *काशीतहाविष्कृत- योस्त्वꣳशब्दः सर्वासु* त्वꣳसोमासिधारयुरितित्वं शब्दः स- र्वासु स्तोत्रीयासु संकृष्टः *त्वान्देवासोरीत्याय इत्येतौ शब्दौ वैश्वमनसश्रुध्ययोः *पवस्वदेव इत्यत्र त्वान्देवा इति त्वांशब्दः संकृष्टः दृष्टिघाव इत्यत्र त्याशब्दः संकृष्टः *अर्चंत्युद्ध- ꣳशीयावितयोः* अर्चं त्यर्कमर्क्किणइति उद्धꣳशीयगौरीवित- योः त्यशब्दः संकृष्टः *सान्वारुहोवꣳशीये* गायन्तित्वा- यामेव यत्सानोः सान्वारुह इति उद्धꣳशीये न्वाशब्दः संकृ- ष्टः *भूर्यवंशीयलेयावितेषु* उद्धꣳशीयकालेयगौरीवितेषु भू- र्यस्पष्टेतिर्यशब्दः संकृष्टः *पर्यूष्वान्धीगवसꣳस्तोभयोः* प- र्यूषुप्रधन्वेति यूशब्दः संकृष्टः *तरध्यैविते* गौरीविताद्विषस्तरध्यै इति ध्यैशब्दः संकृष्टः *राज्येन्धीगवदेव्ययोः* आन्धीगववा- मदेव्ययोः महेसमर्यराज्य इति ज्येसब्दः संकृष्टः *स नित्यः सर्वत्र* अग्निनर इति द्वितीयायां दक्षाप्योयोदमआसेनित्य इति नित्यशब्दः सर्वसामसु संकृष्टः *अत्रैव तृतीयायां त्वꣳ- शादेव्ये* अग्निनराद्वितीयायां मेद्धोअग्नायाꣳत्वाꣳशश्वंतइति वामदेव्ये त्वां शब्दः संकृष्टः। पृणवन्दक्षाप्य इत्येतौ शब्दौ

ष्याभारद्वाजे व्यस्थिरन्षाडिडे ऽवत्यस्यस्वारकावज्ञा-
ययो स्त्वमिन्द्रत्वंवृत्राणिन्द्रस्य यशासि त्वंबृहॅ
स्येत्येतौ शब्दौ द्विहिंकादव्ये चत्वॅस्यन्येयशासि-
हॅस्यभीवर्त्ते ष्वपिनोलौशे त्वॅसुवीरः श्येने व्य-
शब्दः शिशुन्देव्यज्योतिषयोः पुत्रेभ्योभारद्वाजे प्र-

---

मराये *अग्निनरायामेव तमग्निमस्तेवसत्वीन्वृणवनूदक्षाय्यइति
ष्पृशब्दस्यशब्दौ संकृष्टौ *मराये शेयाभारद्वाजे* स्वा-
सु भारद्वाजे हरीमपूरशेप्येति प्याशब्दः संकृष्टः *व्यस्थिरन्
षडिडे *पवित्रंतायां षडिडे अर्चन्तो अस्पतन्तवोव्यस्थिरन्नि-
तिप्यशब्दः संकृष्टः । *अवन्त्यस्यस्वारकावज्ञीययोः* प-
वित्रन्तायां अवन्त्यस्य पवितारमिति स्वारकावयज्ञायज्ञीययो-
स्त्यशब्दः संकृष्टः *त्वमिन्द्रत्वंवृत्राणीन्द्रस्य यशासि* त्वमिन्द्र-
यशा असीत्यत्र इन्द्रस्य यशासि त्वमिन्द्रन्त्ववृत्राणीतिच त्वं
शब्दौ संकृष्टौ *त्वंबृहंस्येत्येतौ शब्दौ द्विहिंकादेव्ये* अ-
त्रैव द्विहिंकारे वामदेव्ये त्वंवृत्राणि हॅस्येतित्वंशब्दस्यशब्दौ
संकृष्टौ *त्वंस्यन्येयशासि त्वमिन्द्रयशाअसीत्यत्रैव यशासित्वंवृ-
त्राणिहॅस्य मतीन्येकइतित्वंशब्दस्य शब्दन्येशब्दाः संकृ-
ष्टाः* हॅस्यभीवर्त्ते *अत्रैवाभीवर्त्ते त्वंवृत्राणिहॅस्येति श-
ब्दः संकृष्टः* ष्वर्पितोलौशे । *गोविसत्वस्वेतिद्वाभ्यालौशे
भुवनेष्वर्पित इति ष्वशब्दः संकृष्टः* त्वॅसुवीरश्येने *गो-
त्रिच्छ्येने त्वंसुवीरो असीतित्वं शब्दः संकृष्टः* व्येशब्दः
शिशुंदेव्यज्योतिषयोः *शिशुंजज्ञानमिति वामदेव्यवैश्वज्यो-
तिषयोः कविर्गीभिः काव्ये इति व्येशब्दः संकृष्टः* पुत्रे-
भ्यो भारद्वाजे *इन्द्रक्रत्वायां भारद्वाजे पुत्रेभ्य इति भ्य-

स्यशब्दोनानतरयोर्युज्याविशीये व्रतान्यस्य श्यैन-
वाजीययोः पूर्व्यमुत्सेधे स्पृक्भिः पार्श्वे हरिण्यास-
तास्येभिर्वत्सासु ॥ १ ॥

त्वेसोमाभ्याभिहीत्येतौशब्दौ दैर्घे छन्यानांश्रुध्ये
पृणध्वंकण्वतरे जातमार्यज्ञीये पाह्युत्वामिच्चरौरवे ध्या-

---

शब्दः संकृष्टः *प्रसशब्दोनानतरयोः* प्रत्यस्मैपिपीषतायां
नानदरथन्तरयोस्त्यशब्दः संकृष्टः *युज्याविशीये* आनोवि-
श्वायां सदोविशीये तुविद्युम्नस्य युज्येति ज्याशब्दः संकृष्टः
*व्रतान्यस्य श्यैतवाजीययोः* स्वादोरित्थायां श्यैतरायोवाजी-
ययोर्व्रतान्यस्य सश्चिरे इतिन्यस्यशब्दौ संकृष्टौ *पूर्व्य-
मुत्सेधे *प्रत्नंपीयूषायामुत्सेधे प्रत्नंपीयूषं पूर्व्यमिति व्यशब्दः
संकृष्टः *स्पृक्भिः पार्श्वे* अपारुत्वायां गायत्रपार्श्वे वि-
श्वापद्रूपापरिपास्पृक्भिरितिस्पृशब्दः संकृष्टः *हरिण्यासप्ता-
स्येभिर्वत्सासु* अपारुत्वायामेव निसवत्सासु अपारुत्वाहरि-
ण्यासप्तास्येभिरिति च ण्याशब्दस्येशब्दौ संकृष्टौ* ।

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये तृतीयस्य
प्रथमा कण्डिका समाप्ता ॥ ० ॥

*त्वेसोमाभ्याभिहीत्येतौ शब्दौ दैर्घे* त्वेसोमप्रथमावृक्तब-
र्हिषइति दैर्घश्रवसे त्वेशब्दभ्यशब्दौ संकृष्टौ *छन्यानांश्रुध्ये*
नदंवोअदतीनामितिछन्याशब्दः संकृष्टः *पृणध्वंकण्वतरे* क
ण्वरथन्तरे देवोवायां पृणध्वमिति ध्वंशब्दः संकृष्टः *जा-
तमार्यज्ञीये* यज्ञायज्ञीये अदर्शिगातुवित्तमायां उपोषुजातमा-
र्यइति र्यशब्दः संकृष्टः *पाह्युत्वामिच्चरौरवे* पाहिनो

ग्निभिश्चरंत्यस्तावे नैये दुर्यंत्युद्यता चान्धीगवे न्यैर-
यज्ञीये त्वान्दूतज्ञीये शग्ध्यूहारमानवयो स्त्वंहृहोहि-
जम्भे त्वंपुरुकौल्मजम्भयोः प्रत्ययकीर्त्ये र्यः का-
लेये पूर्याः संजये वीर्यस्यण्यस्यवारे श्रुधीहृवायां मा-

---

अग्नायां पाह्युतेतिह्युशब्दः संकृष्टः त्वामिद्धिर्नादष्टामिति च
त्वाशब्दः *ह्याग्निभिश्चरन्त्यस्तावे नैये* नैयातिथे अग्नआयाह्य-
ग्निभिरिति स्रुचश्चरंत्यध्वर इति च अत्र प्रस्तावविषये ह्यश-
ब्दत्यशब्दौ संकृष्टौ *दुर्यंत्युद्यता चांधीगवे* आंधीगवे त्रि-
शो त्रिशो वो अतिथिमित्यत्र दुर्य इति र्यशब्दः प्रथमायां
संकृष्टः तृतीयायां यो देवतात्युद्यतेतित्युशब्दाद्येशब्दश्च सं-
कृष्टौ *न्यैरयज्ञीये* अत्रैव यज्ञायज्ञीये हव्यान्यैरयदिति
न्यैशब्दः संकृष्टः *त्वान्दूतं ज्ञीये* सामिद्धमग्निमिति यज्ञायज्ञीये-
त्वांदूतमिति त्वां शब्दः संकृष्टः *शग्ध्यूहारमानवयोः* शग्ध्यू-
ष्विर्तिहारायणे पूर्वमानवयोः शग्ध्यूशब्दः संकृष्टः *त्वंहृहोहिज
म्भे* त्वंहृहोहित्वेरत्र इतिवार्कजम्भे त्वंशब्दहृहाशब्दौ संकृष्टौ *त्वं-
पुरुकौल्मजम्भयोः* अत्रैव कौल्मबर्हिषवार्कजम्भयोस्त्वंपुरुसह-
स्राणीति त्वंशब्दः संकृष्टः *प्रत्ययकीर्त्ये* महादिवाकीर्त्ये
इन्द्रमिद्देवतानय इत्यत्र इन्द्रप्रयत्यध्वरइति त्यशब्दः संकृष्टः
*अर्यः कालेये* यस्यायंविश्व आर्य इति कालेयेऽर्यशब्दः
संकृष्टः *पूर्याः संजये* संजये उतो न उत्पुपूर्या इति र्या-
शब्दः संकृष्टः *वीर्यस्यण्यस्यवारे श्रुधीहृवायाम्* श्रुधीहृ-
वायां वारवन्तीये सुवीर्यस्य गोतम इतिर्यशब्दः संकृष्टः
पुरुण्यस्येति चण्यशब्दः *माघे पृष्ठे* पिबाश्रुतायां पृष्ठे
आग्निर्नोबोधिसप्रमाय इतिप्रशब्दः संकृष्टः *सप्तगेश्रुत्यत्रैतयोः*

ये पृष्ठे सख्येश्रुध्यश्रैतयोस्त्यूमाः पूर्वं ध्यनद्वत्वेक्रतुमि-
त्येतेशब्दाः श्यैते पार्थेहर्यशब्दश्च देव्ये वावृधेन्यश्च-
देव्ये सत्राच्यानकिष्ट्वायोषत्याचवाशे सऽसद्यत्वेदे-
वादन्त्यात्यान्दूरमस्यमन्ते त्वमङ्गकुभे व्युषाः कावे
महत्स्वासंतनिनि वीरसेन्यः संतनिहाद्रिरयो रो-

---

गोमन्त इन्द्रायाऽश्रुध्यत्रेतयोः सखेत्रमख्ये इतिमख्येशब्दः
संकृष्टः *त्यूमाः पूर्वं ध्यनद्वत्वे क्रतुमित्येतेशब्दाः श्यैते*
तदिदासायां श्यैते अनूयं विश्वेमदंत्यूमा अध्यनचध्यनचप्रध्य-
त्वशब्दौ त्वेक्रतुमिति त्वेशब्दः एते शब्दाः संकृष्टाः *पा-
र्थेहर्यशब्दश्च देव्ये* मघवत्पार्थेशब्दतवप्रणीतीहर्यशब्दः सं-
कृष्टः इति वर्त्तते *वावृधेन्यं च देव्ये* एदुमध्वोर्मदिन्तरं-
मिति वामदेव्ये यज्ञेभिर्गीर्वावृधेन्यमिति न्यशब्दः संकृष्टः
*सत्राच्यानकिष्त्वायोषत्याचवाशे* उभयऽश्रृणक ईंत्रेदसुत-
योर्वाशे सत्राच्येति च्याशब्दः नकिष्ट्वासुनङ्गनिष्ट्वाशब्दः यो-
षत्यागमदिति त्याशब्दः एते शब्दाः संकृष्टाः *संसद्यत्वे दे-
वादन्त्यान्त्यन्दूरमस्य मन्ते* इमंस्तोमसमन्तेमऽमद्यद्येद्यशब्दः
त्वेदेवाहविरदन्त्याहुतमितित्वेशब्दस्त्याशब्दौ त्वमादित्यानितित्या-
शब्दः न्दूशब्दः स्मशब्दः षडेते शब्दाः संकृष्टाः समन्ते *त्व-
मङ्गककुभे* त्रैककुभे त्वमङ्गप्रशऽसिषइति त्वंशब्दः संकृष्टः
*व्युषाः कावे* अबोध्यग्निर्ज्म उदेतिकावे व्युशब्दः संकृष्टः *म-
हत्स्वासन्तानिनि* इन्द्रोमदायां सन्तानिनि स्वमिन्महत्स्वजीषूनि-
तस्वाशब्दः संकृष्टः *वीरसेन्यः सन्तनिहाद्रिरयोः* इन्द्रामदायामेव
सन्तनिवार्हाद्रिरयोः अभिहिवीरसेन्य इति न्यशब्दः संकृष्टः *ओ-
षधीभ्योज्ञीये* उपास्मैज्ञीये शऽराजन्नोषधीभ्य इति भ्य-

षधीभ्योऽग्नाय मत्स्यवृहति दधेवार्याणिकमश्वे स्व-
र्णज्योतिरुत्तरे कमश्वे स्वशब्दएनाश्रुध्ये ऽदर्शयावृह-
द्रथंतरयो र्वेहारत्वंश्रुध्ये वृष्णयावषट्कारणिधने का-
व्यंनाभ्यासे त्वांवृत्रेष्विद्रगामश्वमित्येते शब्दास्त्र-
योवारे त्वामित्वांकाष्ठासु प्रतिहारे बृहति त्वांश्रु-

---

शब्दः संक्रुष्टः *मत्स्यबृहति* । मत्स्यपायितायां बृहति म-
त्स्यशब्दः संक्रुष्टः *दधे वार्याणिमृकमश्वे* अग्नःसहोतायां
सामकमश्वे विश्वादधे वार्याणीतिर्याशब्दः संक्रुष्टः *स्वर्ण-
ज्योतिरुत्तरे कमश्वे* अग्नेतमद्यायां साकमश्व एव भवानो
अर्वाङ्स्वर्णज्योतिरितिस्वशब्दः संक्रुष्टः *स्वशब्द एवनाश्रुध्ये*
एनावोश्रुध्ये स्वध्वरामिति स्वशब्दः संक्रुष्टः *अदर्शयावृहद्रथन्तर-
योः* । मत्युअदर्शायतीतिबृहद्रथन्तरयोः र्श्याशब्दःसंक्रुष्टः वहा-
स्वंश्रुध्ये* अग्ने विवस्वदुषस इति श्रुध्ये जातवेदोवहात्वमिति
त्वं शब्दः संक्रुष्टः *वृष्णयावषट्कारणिधने* विधुं दद्राणायां
ऐभिर्ददे वृष्ण्येति ष्ण्याशब्दः संक्रुष्टः *काव्यं नाभ्यासे* अ-
स्मिन्नेव तृचे वषट्कारणिधने देवस्य पश्य काव्यमिति व्यंशब्दः
संक्रुष्टः अनभ्यस्तविषये, अभ्यासे तु विकृष्ट एव पूर्वम-
भ्यस्तं परोऽभ्यास इति वचनात् *त्वां वृत्रेष्विन्द्रगामश्वमित्ये-
ते शब्दास्त्रयोवारे* त्वामिद्धि हवामह इति वारवन्तीये त्वांवृत्रे-
ष्विति त्वांशब्दः वृत्रेष्विति ष्विशब्दः गामश्वमिति श्वंशब्द
एते शब्दाः संक्रुष्टाः *त्वामित्वां काष्ठासु प्रतिहारे बृहति*
त्वामिध्यामेव बृहति त्वामिद्धीति त्वां शब्दः त्वाङ्काष्ठास्विति
त्वांशब्दः प्रतिहारविषये संक्रुष्टः न प्रस्तावे *त्वांश्रुमसाहे*

सप्ताहे ष्विन्द्रबृहत्तरे त्वांशब्दौ पूर्वौष्विद्रत्वजंभे जनित्रयश्येने वीर्यैर्देव्यबृहतो रत्रैवकाम्यंदेव्ये सख्ये-स्फिग्यं च रथंतरे यामेव्यख्य स्त्वोवारथंतरे ॥ २ ॥

अयिष्कारस्य भैस्वरे प्रत्यये ग्रहणैर्विसर्गलोपः

त्वामिध्यामेव सप्ताहे त्रयस्त्वांशब्दाः संकृष्टाः *ष्विन्द्रबृहत्तरे* त्वामिध्यामेव बृहद्रथन्तरे त्वांत्रेष्विन्द्रेति ष्विशब्दः संकृष्टः *त्वां-शब्दौपूर्वौष्विन्द्रत्वजंभे* । त्वामिध्यामेव वार्कजंभे त्वांश-ब्दौपूर्वौत्वामिद्धित्वांत्रेष्विति ष्विशब्दः एते शब्दाः संकृष्टाः *जनित्रश्येने*अरण्ये गेये श्येने देवीजनित्र इ-त्यत्र त्रशब्दः संकृष्टः *वीर्यैर्देव्यबृहतोः* त्रिकद्रुकायां पञ्चनिधने वामदेव्यबृहतोः *साकंवृद्धोवीर्यैरितियैशब्दः सं-कृष्टः *अत्रैव काम्यं देव्ये* । त्रिकद्रुकायामेव पञ्चनिधने वामदेव्ये दातारायस्तुवते काम्यमिति म्यशब्दः संकृष्टः *सख्येस्फिग्यं च रथन्तरे* माभेममाश्रमिश्मेतिरथंतरे उग्रस्य सख्ये तव इति ख्येशब्दः । सव्यामनुस्फिग्यं इति ग्यंशब्दः संकृष्टौ *यामे व्यख्यत्* । यामे व्यख्यन्महिष इति व्य-ख्यशब्दौ संकृष्टौ *स्त्वोवा रथन्तरे* कयानायां रथंतरे स्त्वो-शब्दः संकृष्टः । सामिकं उदाहरणं नार्चिकम् । तेन वाशब्दो न विकल्पार्थः ॥

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये तृतीयस्य द्वितीया कण्डिका समाप्ता ॥ ० ॥

आयित्वादयोभावा विकृष्टांताश्चतुर्दशानुक्रान्ताः क्रमप्राप्तं लोपालोपलक्षणं तदुच्यते *आयिष्कारस्य भै स्वरे प्रत्यये ग्रहणैर्विसर्गलोपः* आइःकारस्तोभे स्वरे प्रत्यये ग्रहणैर्वि-

स्थाभिर्यस्ते सुरूपे श्यतिरभिद्युम्नतृतीयायां वाचः साम्नि भिः स्वासु विशीये श्रुचिः परिप्रियायां मार्गीयवे गविः प्रसोमदायां कण्वतरे सुतिः पिबात्वस्याभिनिधनकाण्व नृभिर्ददिरिंद्रोमदायां बार्हद्गिररश्मयोर्वरीःस्वासु रश्मे गिरेर्वृष्णि ज्यो-

---

सर्ज्जनीयलोपः ग्रहणैरितियावद्ग्रहणमित्यर्थः । नैतत्सामान्यं लक्षणम् । किन्तर्हि वक्ष्यमाणेषूदाहरणेषु लोपः । अतः परं तान्युदाहणानि *स्थाभिर्यस्ते सुरूपे* पूर्वे सुरूपे यस्ते मदायां सूपस्थाभिरिति विसर्जनीयलोपः *श्यतिरभिद्युम्नतृतीयायां* वाचः साम्नि* विशांविहिर्नविश्पतिरिति आयिःकारस्य विसर्ज्जनीयलोपः *भिःस्वासु विशीये* स्वासु विशाविशीये स्त्रुचेश्रुवस्य मन्माभिः प्रशंऽसंति प्रशस्तिभिः इति च भिः शब्दे विसर्जनीयलोपः *शुचिः परिप्रियायां मार्गीयवे* परिप्रियायां ईनिधने मार्गीयवे ससूनुमातराशुचिरिति चिःशब्दे विसर्ज्जनीयलोपः *गृविः प्रसोमदायांकण्वतरे* प्रसोमदायां कण्वरथन्तरे नजागृविरिति विःशब्दे विसर्जनीयलोपः *सुतिः पिबात्वस्याभिनिधने काण्वे* । अभिनिधने आत्वासहस्रमाशतमिति मासुतिरिति परिष्कृतस्यरसि इयमासुतिरितितिःशब्दे विसर्जनीयलोपः *नृभिर्ददिरिन्द्रोमदायां बार्हद्गिररश्मयोः* । नृभिर्ददिः इन्द्रोमदायां बार्हद्गिरपार्थुरश्मयोः शत्रसेवृत्रहा नृभिः, अभिभूरिपराददिरिति च भिः शब्दे दिः शब्दे च विसर्ज्जनीयलोपः *वरीः स्वासु रश्मे* स्वासु पार्थुरश्मे या इन्द्रेण सयावरीरिति रीःशब्दे आयिःकारे विसर्ज्जनीयलोपः *गिरेर्वृष्णि* वृष्णिसाम्नि अभिप्रवायां गिरेरिवेति रेःशब्दे आ-

तिस्तावे प्रत्युबृहति सोमस्यतिर्हेप्रत्यये सहस्रधारा-
यां त्वाष्ट्रीसाम्नोः स्वरप्रथमे चारिष्टे चानादा व-
द्रिरभ्यासे प्रत्यये क्रायां वैश्वज्योतिषवात्सप्रार्केषु
नकि नकिष्टद्र्याऽंस्वशब्दे प्रत्यये गौरीवितासि-
तयोः ॥ ३ ॥

---

यिः कारे विसर्जनीयलोपः *ज्योतिस्तावे प्रत्युबृहति* प्रत्यु-
अद्दर्शायती बृहतिज्योतिष्कृणोतीति प्रस्तावविषये तिः शब्दे
विसर्जनीयलोपः *सोमस्य तिर्हे प्रत्यये सहस्रधारायां त्वाष्ट्रीसा-
म्नोः* स्वारयोस्त्वाष्ट्रीसाम्नोः सहस्रधारायां सोमस्यातिरिति
तिः शब्दे विसर्जनीयलोपः *स्वरप्रथमे च* षड्वायोः स्व-
राणां प्रथमे स्वरे सहस्रधारायामेव हेशब्दे प्रत्यये विसर्जनीय-
लोपः *अरिष्टे चानादौ* सहस्रधारायामेवारिष्टे अनादावभ्यासे
प्रत्यये । किमुक्तंभवति पनीरापायिणामिति प्राप्ते आद्यस्य तका-
रस्य लोपः । तस्मिन् लुप्ते आदिवर्जित इकारोऽभ्यस्त इत्य-
नादिरभ्यासः । यथा इन्धे राजायां अग्निमभीतिरस्मिन्नूनादावभ्या-
सेप्रत्यये इकारेतिशब्दे विसर्जनीयलोपः *अद्रिरभ्यासे प्रत्यये-
ऽक्रायां वैश्वज्योतिषवात्सप्रार्केषु* । अक्रायां वैश्वज्योतिषवा-
त्सप्रार्केषु । अक्रायां ज्योतिषवात्सप्रदीर्घतमसोर्केषु बृहत्तमोमो-
वाहवे स्वानोअद्रिमिति अभ्यासप्रत्यये द्रिःशब्दे आपिःकार-
स्य विसर्जनीयलोपः । *नकिर्नकिष्टद्र्यायां स्वशब्दे प्रत्यये
गौरीवितासितयोः* । नकिष्टद्र्यायां नकिः स्वश्चेति किःशब्दे
विसर्जनीयलोपः स्वशब्दे प्रत्यये ॥

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये तृतीयस्य
तृतीया कण्डिका समाप्ता ॥ ० ॥

उःकारस्यौहोवायां प्रत्यये ग्रहणैर्विसर्गलोपः पृथुः सांवर्ते क्रतुः परीताध्यास्यायामायास्ये त्रीणि त्रितायां वार्शे परिप्रियायां च मार्गीयवे क्रतुरिंद्रक्रतुमित्यत्र छम्भश्यैतनित्रेष्विन्दुर्द्धर्त्तायां वासिष्ठे रहस्ये च योधाबृहति वाजयुः सदोवनायामन्तरिक्षे सजूरग्नेबृहति विसर्जनीयकारौजीराः सैंधु-

---

*उःकारस्यौहोत्रायां प्रत्यये ग्रहणे विसर्गलोपः* । उःकारविसर्जनीयस्य अहोत्रायां प्रत्ययस्य पूर्ववद्वक्ष्यमाणेषूदाहरणेषु विसर्जनीयलोपः । अतः परमुदाहरणानि वर्त्तिष्यन्ते । *पृथुः सांवर्त्ते* एंद्रनायां सांवर्ते गिरिर्नविश्वतः पृथुरिति थुःशब्दे उःकारस्य विसर्जनीयलोपः *क्रतुः परीताधास्यायामायास्ये* । त्रिणिधनायास्ये श्रीणंतायां क्रतुरिति तुः शब्दे विसर्जनीयलोपः *त्रीणित्रितायां वार्शे* त्रीणि त्रितायां त्रिक्रतुरिति तुः शब्दे तुःकारात्विसर्जनीयलोपः *परिप्रियायां च मार्गीयवे* परिप्रियायां च ईनिधने मार्गीयवे स्वानैर्यातिकविक्रतुरिति तुः शब्दे विसर्जनीयलोपः *क्रतुरिन्द्रक्रतुमित्यत्र छंभश्यैतनित्रेषु* । इंद्रक्रत्वायांमहावैष्टंभश्यैतपूर्वजानित्रेषु माशिवासोअवक्रतुरितिमुःशब्दे विसर्जनीयलोपः *इंदुर्द्धर्तायां वासिष्ठे* । धर्त्तायां उद्वत्रायेवासिष्ठे इंदुर्हिन्वान इंदुःशब्दे उःकारविसर्जनीयलोपः *रहस्ये च योधा बृहति* रहस्ये च योधारयां बृहति द्विद्विः पदमभ्यस्येत तस्मिन् इंदुरश्च इति दुःशब्दे विसर्जनीयलोपः *वाजयुः सदोवनायामन्तरिक्षे* । अन्तरिक्षे सदोवनायां मीढांत्सप्तिर्नवाजयुरिति युःशब्दे विसर्जनीयलोपः *सजूरग्नेबृहति* अग्नेविवस्वायां बृहति सजूरश्विभ्यामिति जूः

क्षिते निकामावितशृङ्गयो ज्याकाः प्रोषु वत्सास्व-
कारोगोमन्नः श्रुध्ये समुद्रः प्रथमस्वरइमाउत्वायाअं-
इयैतनौधसयोः स्वःशब्दः पूर्वः पूर्वे यौक्ते स्वशब्दश्चै
वातिहारप्राप्तोलोपः क्रियते सिष्ठत्रैशोकयोश्च यौक्ते

---

शब्दे विसर्जनीयलोपः *विसर्जनीयाकारौ जीराः सैंधुक्षिते*
पवमानस्य जिघ्रत इति सैंधुक्षिते जीरा अजिरेतिविसर्जनी-
याकारौ लुप्येते *निकामावितशृंगयोः* आजागृवायां गौरी-
वितगौशृंगयोः सपंतियं मिथुनासोनिकामा इति विसर्जनीया-
कारयोर्लोपः *ज्याकाः प्रोषु वत्सासु* प्रोष्वस्मा इति नियुत्व-
त्सासु ज्याकाअधीतिविसर्जनीयश्च अकारश्च विसर्जनीया-
कारौ लुप्येते *अःकारोगोमंनः श्रुध्ये* गोमंनायां श्रुध्ये-
नः शब्दे अकारसहितो विसर्जनीयोलुप्यते नराएवं स्थिते-
अस्वरस्य नकारस्य परगमनं इकारे नकारोगतः निएवं स्थि-
ते तालव्यवृद्धत्वादायि भावः । ततः गोमंनाइंदोएतद्रूपं भवति
*समुद्रः प्रथमस्वरइमाउत्वायां इयैतनौधसयोः* समुद्रइव पप-
थ इति यथा समुद्रशब्दः प्रथमस्वरमाप्तो भवति तथा द्रः-
शब्दे अःकारलोपः । अत्रापि पूर्वपदेन रूपसिद्धिः *स्वःश-
ब्दः पूर्वः पूर्वे यौक्ते* वृषापर्वायां पूर्वे योक्ताश्वे प-
वमानस्वर्दृशामिति पूर्वस्य स्वशब्दस्य अकारलोपः । अभ्य-
स्ताभ्यासापेक्षया पूर्वशब्दः अत्रापि रूपसिद्धिः पूर्ववत् *स्वः-
शब्दश्चैवातिहारमाप्तोलोपः क्रियते सिष्ठत्रैशोकयोः* प्रसङ्गादिद-
मुच्यते स्वःशब्दविसर्जनीयलोपः प्रकृत इति अतः स्वशब्द-
विसर्जनीयस्यैव अतिहारप्राप्तस्य लोप उपदिश्यते । वक्ष्याति
हि पुरस्तात् । स्वः सर्वत्र यथा स्वर्विदशंकुनिसाहीये च त्रिः

**चोत्तरे ण्योर्मरायेऽभ्यासे प्रत्यये विसर्जनी चालोपमेके विरामे ॥ ४ ॥**

स्वशब्दविसर्जनीयलोपः प्राप्तः स्तोभव्यवहितत्वात्सर्वत्रातिह्रियते । यथा—किमुदाहरणं पवस्वमधुमत्तमायां अस्यपीत्वास्वर्विद इति शंकुनिसाहीययोः स्वः शब्दे विसर्जनीयस्य रेफीभूतस्यातिहारः *स्वर्विदा नार्मेधे* अत्रापि इंद्रवाहास्वर्विदानार्मेधे इंद्रवाहास्वर्विदेति स्वः शब्दे विसर्जनीयलोपः रेफीभूतस्यातिहारः । एषउत्सर्गः वस्वे प्रत्यये । अयमपवादः उत्तरे यौक्ताश्वे स्वः शब्दे विसर्जनीयलोपः । स्वः शब्दः परोनातिहुते पवादः पवमान स्वर्द्दशमिति । सुत्रा ३३३ सुत्रा ३९६ ३ शामितिप्राप्तेप्रतिषेधः अतिहारस्य *सिष्ठत्रैशोकयोश्च* धर्त्तायां वासिष्ठे स्वःसिषासन्निति स्वःशब्दे विसर्जनीयस्यातिहारप्राप्तस्य लोपः *त्रैशोके च स्वासु* स्वःपतिर्यदीवृक्षइति. स्वः शब्दे विसर्जनीयस्यातिहारप्राप्तस्य लोपः । प्रासङ्गिकमुक्तम् । प्रकृतमेवेदानीं वर्णयिष्यामः । स्वःशब्दे विसर्जनीयस्य लोपः प्रकृतः । तयोस्तदेव व्याख्यानं । सिष्ठत्रैशोकयोश्चेति *यौक्ते चोत्तरे *एतदपि व्याख्यातम् नस्वेप्रत्ययइति *ण्योर्मरायेऽभ्यासे प्रत्यये* अग्निव्रतायां मरण्योः शब्दे विसर्जनीयलोपः । *अभ्यासे प्रत्यये* लुप्यते ण्योः शब्दे एवप्रत्ययः *विसर्जनीयस्यचालोपमेकेविरामे* अग्निव्रतायामेव मराये एके आचार्या विसर्जनीयस्य अलोपं मन्यंते । विरामेण्योः ण्योण्यो इत्येव । अथवा विसर्जनीयस्य एके अलोपं मन्यन्ते अविरामे सन्धावपि विकल्प इत्यर्थः यथास्तंव्युचैकइति । अत्रास्थितसंधिः संधिर्वाभवतीतिएवमिहापिविकल्पः । संधावलोपः लोपोवेति ॥४॥

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये तृतीयस्य चतुर्थी कण्डिका समाप्ता ॥ ० ॥

तकारलोप उच्छन्दः पार्थुरश्मे यदुदीरायां मि-
लांदेच वर्चे प्रत्यये परिमर्ड्विषत्स्वासु हारायणे दृ-
ढाचित्स्वासुर्वीकेभ्यासे प्रत्यये वोवित्सन इद्रायां॑-
सौमित्र इंद्रोमदायामिच्छन्दः पार्थुरश्म इद्विहिंका-
रज्ञीययोस्त्वमिन्द्रपरित्ययोः युद्वैश्वामित्रे प्रसुन्वा-
नतीयायां तवेत्प्रत्युबृहति मकारलोप उत्सन्नकं(छि)-

*तकारलोपः* लोपाधिकारात्तकारलोप इदानीं वर्ति-
ष्यते । पूर्वत्र्यात्वद्वचनम् *उच्छन्दः पार्थुरश्मे यदुदीरायाम्*
पार्थुरश्मे यदुदीरायां यदुदीरत इति दुःशब्दे तकारलोपः *इ-
लांदे च वर्चे प्रत्यये* इलांदे च प्रथमायां पावकवर्चाः शुक्र-
वर्चा अनूनवर्चा उत, अत्राभ्यासे वर्चशब्दे प्रत्यये तका-
रलोपः *परिमर्ड्विषत्स्वासु हारायणे* स्वासु हारायणे न-
किर्हिदानं परिमर्ड्विषदिति अस्य तकारलोपः *दृढाचित् स्वासु
वींकेऽभ्यासे प्रत्यये* स्वासु वींके तेन दृढा चिदिति चिच्छब्द-
एत्राभ्यासे प्रत्यये तकारलोपः *वोवित्सन इन्द्रायां॑ सौमित्रे*
उच्चातायां सौमित्रे वरिवोवित्सदिति वित्च्छब्दे तकारलोपः *इन्द्रो-
मदायामिच्छन्दः पार्थुरश्मे* ऋज्वर्थः *इद्विहिंकारज्ञीययोस्त्वमि-
न्द्रपरित्ययोः* इच्छब्दे तकारलोपः । द्विहिंकारयज्ञायज्ञीययोः त्व-
मिन्द्रयशायां द्विहिंकारे त्वंवृत्राणि हंस्यप्रतीत्येकइदित्यत्र तका-
रलोपः । यज्ञायज्ञीये परित्यंहर्यतायां योदेवान्विश्वांइदितिकारे
तकारलोपः*युद्वैश्वामित्रे प्रसुन्वानद्वितीयायाम्* वैश्वामित्रे भुजे
नयुदिति युच्छब्दे तकारलोपः *तवेत्प्रत्यु बृहति* प्रत्युअदर्शा-
यत्यां बृहति तवेदुष इति वेच्छब्दे तकारलोपः *मकारलोपः*
इदानीं मकारलोपो वर्तिष्यते वर्त्तमानेषूदाहरणेषु *उत्संन्नकंदै-

दैर्घेभ्यभिहीत्यत्र माꣳसूर्यमायास्ये साप्तमिके तत्रा-
यां मनीषांक्षौद्रेषु सहोदैर्घमरायवैराजर्षभेषु स्त्रसा-
मैटते भ्यासे प्रत्यये सईत्रिकबृहति प्रर्मीयज्ञाबृह-
त्युकारलोप उपद्दगयꣳसूर्यायामैटत उतविष्णोश्च ज-
निताय।ꣳश्यावाश्वे यकारःपरिष्टोभंत्ये त्यस्मिछन्दे
दाविज्ञीये वाशब्दः सफेप्रियंदेवायां प्रथमतृतीययो-

---

र्घेभ्यभिहीत्यत्र* दैर्घश्रवसेभ्यभिहिश्रत्रसेत्यत्रउत्सन्नकमितिकंश-
ब्दे मकारलोपः *माꣳसूर्यमायास्ये साप्तमिके तत्रायाम्*
तत्राहꣳसोमायाꣳसाप्तमिके द्विनिधनायास्ये पुरूणिबभ्रोनिचरं-
तिमाम् अत्रमांशब्द एकाक्षरमुदाहरणम् । घृणातपंतमतिसूर्यपरइ-
तिमांशब्दसूर्यशब्दयोः मकारलोपः *मनीषांक्षौद्रेषु सहोदैर्घम-
रायवैराजर्षभेषु* श्रुधीहत्रायां बोधात्रिमस्यार्चतोमनीषामिति-
अत्र मकारलोपः। क्षौद्रेषु सहोदैर्घमरायवैराजर्षभेषु *स्त्रसामैटतेऽ-
भ्यासे प्रत्यये*अस्यप्रत्नायामैटते पयः सहस्रसामितिअभ्यासे
प्रत्यये मकारलोपः स्त्रसाशब्द एव प्रत्यय इत्यर्थः*सईत्रिक-
बृहति *त्रिकद्रुकायां बृहतिसईममादेतिइकारे मकारलोपः *पर्मी-
यज्ञाबृहति* यज्ञायज्ञाबृहतिपर्मीशब्दे मकारलोपः *उकारलोपः*
उकारलोपइदानीं वर्त्तिष्यते *उपद्दगयꣳसूर्यायामैटते* अस्यप्र-
त्नायामैटते अयꣳसूर्यइत्रोपद्दगितिइवउपेतिउकारलोपः *उतविष्णो-
श्चजनितायाꣳश्यावाश्वे* सोमःपवतायां त्रैष्टुभे श्यावाश्वे जनिता
उतेति उकारलोपः(यकारलोपः)*यकारः परिष्टोभंत्येत्यस्मिछन्दे-
दाविज्ञीये* दाविद्युतत्यारुचेतियज्ञायज्ञीये परिष्टोभंत्याकृपेतियकार-
लोपः *वाशब्दः सफेप्रियंदेवायां प्रथमतृतीययोर्विकल्पयोः*
आसोतायायां सफे प्रियं देवानां प्रथमतृतीययोर्विकल्पयोर्वा-

विंकल्पयोरकारःसनेमित्वायामदेवॐश्रुध्यत्रैतष्कले-
ष्वऽघायोर्वारे प्रथमें ऽधसःक्षुल्लकान्धीगवयो वृद्धा-
दक्षरद्वैदन्वते प्रथमे ऽद्रयुसिमास्वक्षरन्नक्रवॐस्त्वा-
ष्ट्र्याद्ये ऽग्नयेज्ञीय आकारस्तंत्वाविप्रायामिहवद्वाम
इकारः प्रसोमाश्वे व्यञ्जनमपरांगं विरामे लुप्यते

---

शब्दलोपः मनूजाप्लुतोवलोपश्चेत्येतदुक्तंभवति*अकारः सने-
मित्वायामदेवॐश्रुध्यत्रैतष्कलेषु* गोमनायां सनेमित्वामस्मदेतिअ-
देवमितिअयमकारोलुप्यते श्रुध्यत्रैतष्कलेषु *अघायोर्वारेप्रथ-
मे* वारवंतीये प्रथमे स्वासु निर्मत्यादघायोरिति अकारलोपः
*अंधसःक्षुल्लकांधीगवयोः* पुरोजितीवोअंधस इति अकार-
लोपः क्षुल्लककालेयांधीगवयोः*वृद्धादक्षरद्वैदन्वतेप्रथमे* ऊ हस-
माम्नायप्रथमे वैदन्वते पवित्रे सोमोऽक्षरदितिवृद्धात्सोमशब्दात्पर
आकारलोपः *अद्रयुःसिमासु* सखासुशेवोअद्रयुरितिअकारलो-
पः*अक्षरन्नक्रवॐस्त्वाष्ट्र्याद्ये* सुतासोमायां त्रिणिधने त्वाष्ट्री-
साम्नि पवित्रवन्तो अक्षरान्निति देवासो अब्रुवान्निति च तो-
शब्दात् वृद्धादकारलोपः । सोशब्दाच्च वृद्धादकारलोपः *अग्न-
ये ज्ञीये* यज्ञायज्ञीये स्वासु यज्ञायज्ञावो अग्नय इति अकारलोपः
*आकारस्तंत्वाविप्रायामिहवद्वामे* तन्त्वाविप्रायां संत्वामृजं-
त्यायव इति आकारलोपः इहवद्वामदेव्ये *इकारः प्रसोमा-
श्वे* प्रसोमासोविपश्चित इति आश्वे वनानि महिषीइवेति इका-
रलोपः *व्यंजनमपरांगं विरामे लुप्यते* व्यञ्जनमपराङ्गं पूर्वा-
ङ्गमित्यर्थः । तद् विरामे लुप्यते । कानि पुनस्तानि व्यञ्जनानि ।
उच्यन्ते । अनुस्वारः । रेफः । स्वरभक्तिः । क्रमजं । स्पर्शश्च ।
स्पर्शे प्रत्यये एतेषां लोपः । एतेषां च अन्तः पदिकानामेतल्लु-

ऽभ्यासे च नोर्मयोर्णसार्जुन ऋभ्वस एवामृताचार्के

---

क्षणं । कुतः ? प्रत्युदाहरणेषु अन्तः पदिकोदाहरणात् । तस्मा-
देत्रमुदाहरणानि । अनुस्वारादीनि अनुस्वारस्य तावत् वा-
मदेव्ये मᳪहिष्ठोमत्मदंधस इति । तथा त्वᳪसोमायाᳪहाविष्कृ-
तेपवस्वमᳪहयद्वायिरितिरेफोदाहरणं । वयमुत्वायाᳪसौभरे त्वा-
मिध्यवितारंवव्रृ । अत्रवृद्धमृवर्णमिति आर्भावः । प्रतिहारमा-
म्रस्याविरामे अत्रविरामत्वाव लोपः । तथा ऐडस्वरेमत्स्यपायिना-
यां वृषातेवृष्णइन्दुःवृषामदोवरेण्य इति च आर्भूतयोरेफ-
लोपः । स्वरभक्तेरुदाहरणम् । पुनानायाग्निराणिधनायास्ययौ-
धाजययोः । अपोवसानो अर्षसि आपृच्छधन्धरुणं वा ऽज्य-
र्षसीति च वर्षशब्दस्वरभक्तिलोपः । क्रमजोदाहणं अश्नेम-
तुद्रवेतिद्रशब्दक्रमजस्य दकारलोपः । तथा आतूनाकूपारेनम-
त्तासोदित्सअभ्यासविषयेत्सशब्दे क्रमजस्य तकारस्य लोपः । स्प-
र्शइसत्रोदाहरणानि । त्वᳪसुमोमन्दितम इत्यत्र आश्वसूक्ते
त्वंशब्दे द्वौ तकारौ पूर्वांगत्वादेकस्य क्रमजत्वाव द्वितीयस्पर्श-
प्रत्ययत्वात् तस्मात्क्रमजः स्पर्शोलुप्यते । तथा परित्यᳪहर्यतᳪ-
हरिमिति यद्वाहिष्ठीयेर्यशब्देरेफः पराङ्गं, एकः क्रमजोयकारः
पूर्वाङ्गं । पूर्वाङ्गत्वात्तस्य लोपः । तथा परिस्वानायाᳪहावि-
ष्कृतेषु मदेषु सर्वधा इति सर्वशब्दे रेफः पराङ्गं । एकः क्रम-
जो वकारः पूर्वाङ्गम । पूर्वांगत्वादेकस्य वकारस्य रेफलोपः
*अभ्यासे च* अभ्यासे च प्रत्यये लुप्यते । च शब्दात्पूर्वाङ्गं
अन्तः पदिकमिति यथा दीर्घतमसोर्के इन्द्रस्य सोमपवमानऊर्मि-
णेति प्रथमस्य रेफस्य विरामत्वाल्लोपः । उत्तरस्य अभ्या-
सप्रत्ययत्वात् । तथा असाविसोमायां पर्जन्यः पिता महिषस्य

आन्कारोनुनासिकोवृद्धः सर्वत्रारेववैखानससंत-
निषु ॥ ५ ॥

---

पर्णिना ३ णिना ३ तथा अभिप्रियाणि पवतायां नामानि य-
ह्वो अधियेषु वर्द्धत इति, अयं पूषायां च सोमः पुनानो अर्ष-
तीतिदीर्घनमसोर्क एव । *नोर्मयोर्णसार्जुनऋभ्वसएवामृताचा-
चार्के* । नेति प्रतिषेधः । पूर्वलक्षणप्राप्तानामपवादः । द्विर्यं-
पञ्चस्वायां प्रस्तायन्तऊर्मय इति अभ्यासप्रत्ययस्यान्तःपदि-
कस्य रेफस्य लोपप्रतिषेधः । प्रसोमदेवायां सिन्धुर्नपिप्ये अ-
र्णसा आहर्यतो अर्ज्जुन इति पौरुहन्मनरेफस्याभ्यासप्रत्यय-
स्य रेफलोपप्रतिषेधः । प्रयोगे सन्ध्ये विषये प्रत आश्विनीरिस-
त्र विश्वाधामानि विश्वचक्षऋभ्वस इति शैखण्डिने परिप्रध-
न्वायां दीर्घनमसोर्के । एवामृता इति रेफस्य लोपः पूर्ववत्
*आन्कारोऽनुनासिकोवृद्धः सर्वत्र* आन्कारोवृद्धः सन् अनु-
नासिको भवति । रङ्गी भवतीत्यर्थः । यथा परिधीँरतिता-
मित्यत्रापौरुहन्मनद्वैगतपौधाजयहबृहद्वैगगवरथादिषु । *अरेव-
वैखानससन्तनिषु* एषु वृद्धोपि सन्ननुनासिको न भवति । रेव-
तर्नायामुभयोरपि रैवतयोः आद्यस्त्वावानित्यत्र पदगीत एव
भवति । वैखानसे अवद्युतायां पदगीत एव भवति । इंद्रोमदायां
संतनिनि अस्माँइंद्रवासाविति च पदगीतः त्रिष्वपि रङ्गोन भ-
वतीत्यर्थः ॥

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये तृतीयस्य पञ्चमी
कण्डिका समाप्ता ॥ ५ ॥

---

आउवाव्यवहितमाउभवति सर्वं पदान्त्यं च व्यं-
जनं लुप्यते शाता२३उवाभवा सियो२३४वाउग्रा-
२३उवाशर्ममहो२३४वायूजा२३उवावाजेषुचो२३४वा-
मघा३१उवा२३एवंजातीयान्यनाउभावोभृगएवतरे रे-
तःश्येने षुमनः सन्तनिन्घाशिश्रयुः प्रवद्धार्गव औ-
ष्ठयश्चान्तः पदिकोनाउ भवति सर्वत्र यथा मा-
न्दी२मा२३४दायतो३आउवा२३ श्रीणन्तो गोभिरू ३
आउवा २३ मरुच न योनिंॅसोमसाम्नि सीदछये

---

*आउवाव्यवहितमाउभवति सर्वपदान्त्यं च व्यञ्जनं लुप्यते
शा ३ ता ३३ उ ३ वा २३ भ २११ वा ४ सियो ३३ ३५ वा ३
उ ३ श १ र्म २ महो २३३ ३४५ वा ३ यू १ जा २३ उ २
वा ३० वाजेषु चो ३३३४५ वा ३ मघा ३३ उवा ३
एवं जातीयानि *आउवाव्यवहितस्यार्चिकस्य अंत्यः स्वर
आउभवति । यच्च पदांतीयं व्यंजनं तस्य च लोपः । तथो-
दाहृतम् । स्वारसौपर्णे कयानश्चित्र वृषापवस्वतृचांत्ययोः ।
अत्रैव उद्यातायां सौपर्णे । उग्रञ्शर्मेति च एतेषु लोपः । तथा
काण्वरथंतरे प्रसोमदायां अच्छाकोशंमधिश्चति *अनाउभावोभृग-
एवतरे* अकारः प्रतिषेधे पूर्वलक्षणेन आउवाभावस्तस्य प्रतिषे-
धः । प्रसुन्वायां कण्वतरे हतामखंनभृगवः *रेतः श्येने* गो-
विद्श्येने रेतोधा इति प्रतिषेधः* षुमनः संतानिनि *इन्द्रोमदा-
यां सत्राजेतु मनो इति आउभावप्रतिषेधः *अशिश्रयुः प्रवद्धा-
र्गवे* प्रवद्धार्गवे प्रोअयास्यां अभिधेनवः पयसे दशिश्रयुरिति
आउभावप्रतिषेधः *औष्ठ्यश्चांतः पदिकोनाउ भवति सर्वत्र-
यथा मां ३ दी ३ मा २३३३ दा ३ याता ३३ आउवा ३३

ना २३४ हायिनायाउवानाईमाउवा२३ सुनोतसौ पर्ण ऊर्म्मिणावाम्रमेधातिथयो वर्णसदस्यवप्रवदुद्वत्सा-मराजेषु स्पर्शानामलोपोयथा द्युम्नानिमानू २ षाणा ३ माउसहास्रिणा३ माऊघाजिन्हिया२ माउवन्मधुमा त्सू२ वीरिया२माउतिरेभा३ नाऊघृवसाना३ःपारिया३ सी३ निर्णिजा३ माउश्येनो नयो नी२. द्यार्त्तवा३. ता३ मा-

---

श्री २ णंतोगोभि २ रू २३ आउवा ऽ२३ मरूत्व आउवा ३३ ओष्ठयश्चांतःपदिको नाउ भवति सर्वत्र यथोदाहृतम् । सोमउष्वा-यामग्रेस्त्रिणिधने श्रीणंत इति च पवमानस्य जिघ्नतायां संततिनि हरिश्चंद्रामरुद्गण इत्यनाउभावः *नयोनिं*सोमसाम्नि सीदच्छयेना ३३२हा ३ यिना ३ या उवा ना इमा ३ उवा ३२* अध्वर्य्वेड-सोमसाम्नि स्वासु सीदच्छयेनोनयोनिमिति ओष्ठयश्चांतःपदिक-स्याउभावः *सुनोतसौपर्णे* त्रिलम्बसौपर्णे अध्वर्यो अद्रिभिरित्यं-तायां सुनोतामधुमत्तममित्याउभावः *ऊर्मिणावाम्रमेधातिथयोः* अभिसोमायां वाम्रमेधातिथयोः उर्मिणेति आउभावः *वर्ण-सदस्यवप्रवदुद्वत्सामराजेषु स्पर्शानामलोपो यथा द्युम्नानि मा-नू३ ३षाणा२३मा ऊ२सहास्रिणा ३२ मा ३ उघाजिन्हिया ३२ मा ३ उवन्मधुमा२३त्सू ३२ वीरिया ३३ मा ३ ऊतिरे-भा ३२ ना २ ऊघृतावसानाः पा३रिया३२सी २३ नि-र्णिजा ३२ मा ३ ऊश्येनोनयोनी ३ द्यार्तवाता ३२ मासदा ३३ दा ३ ऊ२ *ऊशाकरवर्णे पुनानिवृत्तायां इषंतोकायां च त्रासदस्यवे पुरोजित्यां प्रवद्भार्गवे प्रो अयास्यामुद्वद्भार्गवे शिशुंजज्ञानायां२सा-मराजे असावित्रिसोमायां एतेषां साम्नामेतेषु तृचेषु यथासंख्ये-नोदाहरणानि *नतिष्टुपृशिशुमुद्गाति सोमो वाईरा २३१ जमनूरा-

सदा३दाउ नतिष्टुप्शिशुमुद्गतिसोमो वायिरा२३जम- नूरा२३१जतिष्ठा ३ उ रहस्ये च न सर्वमाउभवति व्यञ्जनं च च न लुप्यते यथा वाजीयनित्यवत्साताषंगसिमा- सु यत्राउभावो व्यंजनलोपश्च तद्वक्ष्यामः स्वरान्तः कण्ठ्यः सर्वत्र विष्णवे सहस्रिणामिति यण्वापत्ययो रञ्जोरैवतयोर्व्यमः कारश्च रैवते सिमासु सर्वमाऊभ-

---

२३१जनिष्ठा ऊ* । उद्वद्वार्गेत्रे शिशुंजज्ञानाया॰ृसोमोविराजमनु- राजतिष्ठुविति स्पर्शस्य पकारस्य लोपः *रहस्ये च न सर्वमा- उभवति व्यंजनं च न लुप्यते यथा वाजीयनित्यवत्सातीषङ्गसिमा- सु* रहस्ये च आउभावोव्यञ्जनलोपश्च न भवति । ए- ष उत्सर्गः । यथा स्वासु रायोवाजीये वस्वीरनुस्वराज्यमिति । तथा नित्यवत्सासु सम्रास्येभिर्ऋक्वभिरिति प्रतिषेधः । अतीषंगे सिमासु च सोमउष्णापवस्ववाजयोः एवमादीनि *यत्राउभावो- व्यञ्जनलोपश्च तद्वक्ष्यामः* । रहस्ये यत्राउभावो भवति व्यञ्ज- नलोपश्च तदुत्तरत्रोदाहरिष्यामः *स्वरांतः कण्ठ्यः सर्वत्र* य था मंद्रयायातिधारयेतियाशब्दे आकारः कण्ठ्यः तस्याउभा- वोभवति कः प्राप्ते एतदारभ्यते । अनुद्वधा॰र इति सन्निकर्षप्र- तिषेधाः या ३ आउवेति प्राप्ते आउभावः । वचनान्तरोव्यसं- धिर्भवति रायांउवेतिभवति तस्मादत्राउभावोभवति *विष्णवे सहस्रिणमिति यण्वापत्ययोः* सोमाअर्षतु विष्णव इति । आपवस्व सहस्रिणमिति च आउभाव्योव्यंजनलोपश्च *अंजो- रैवतयोर्व्यम्* अंजोवैरूपे रैवतर्षभे च तालव्यस्याऊभावः । अंजोवैरूपेसमुद्रस्याधिविष्टपेमनीषिणः रैवतर्षभेद्याविद्यवीतिरुया आगहीति च *अःकारश्च रैवते* अःकारश्च उभवति तालव्यं

वत्यनृगंते छान्दसीषु दिशोवसोराणां घोनामृगं-
तेषु चाऽक्षारित्यस्य शब्दस्य रेफलोपः स्वरघोषव-

---

चेति अःकारः वातोमद इति *सिमासु सर्वमाउभवति *सोम-
उष्त्रापवस्त्वयोः सिमासु सर्वस्याउभावः *अनृगन्ते* सिमास्वे-
व एतयोरेव तृचयोः आउभावप्रतिषेधः *छांदसीषु दिशोव-
सोराणांघोनाम* च्छांदसीषु सिमासु गातुमनुशꣳसिषोदिशः
पूर्वीणां पुरूवसोयः शविष्ठः शूराणां योमꣳहिष्ठोमघोनां एते-
ष्वाउभावोव्यंजनलोपश्च *ऋगन्तेषु च* छान्दसीष्वेव ऋगंतेषु
आउभावोव्यंजनलोपश्च मꣳहिष्ठवज्रिनृजस इति प्रथमायां स-
नः स्पर्षदिति द्विष इति द्वितीयायां समर्येषु प्रवाह इति तृती-
यायाम् *अक्षारित्यस्य शब्दस्य रेफलोपः स्वरघोषवत्सु प्र-
त्ययेषु* अक्षारित्येतस्मिञ्छब्दे रेफस्य लोपः । सन्धौ स्व-
रप्रत्ययस्य घोषप्रत्ययस्य च । अत्र किं प्राप्तं आःकारोऽत्र-
मिति प्रकृत्याक्षाश्चाउवायां प्रत्यये नित्यवत्सातीषंगसिमा-
स्विति अत्र च आकारमात्रस्याउभावोन विसर्जनीयस्य । कथं
गम्यते । येन विवृत्तिं करोति ततोऽवगम्यते न विसर्जनीयस्य
लोप इति । लोपे तुरौपसंधिर्भवति । तथासति अ-
क्षाउ भवति । तस्मादलोपः । तत्र स्याद्विसर्जनीयरेफलो-
पार्थं इह पुनरारम्भो युक्तः—नित्यवत्सातीषंगसिमासु स्वरप्रत्य-
यस्य लोपः । व्यंजनप्रत्ययस्य उदाहरणानि । उत्तरे मानवे
सोमोदुग्धाभिरक्षारिति प्रस्तावविषये हकारघोषे प्रत्यये रेफ-
लोपः । अन्येषु तु सामसु अघोषप्रत्ययत्वादलोपः *ज्योक्तः
शब्दः स्तोत्वाꣳहे* श्रुधीहवायां मरायां मारे अस्मन्मघवः

त्सु प्रत्ययेषु ज्योक्कः शब्दस्त्वोत्वाᳫंहे सकारलोपः श्रवस्तमः साह्वान्विश्वायाᳫंसᳫंहिते सुशस्तिभिरिलान्द्वितीयायां मानस्तरभिमाजमावर्त्तेथादौ लोपः परांगं वा सुहस्तास्तावे ज्ञीयस्य लोपः पराङ्गं वेंद्रायेन्द्विति क्रौंचे वलोपः संधावुगतिर्विरते द्वियकारसंयुक्ते विकृष्टे पूर्वोयकारः प्लुत आकारः संप-

---

ज्योक्क इति क्कः शब्दस्य त्वᳫ हकारे प्रत्यये सकारलोपः *श्रवस्तमः साह्वान्विश्वायाᳫंसᳫंहिते* अदाभ्यः सᳫंहिते अग्निस्तुविश्रवस्तम इति सकारलोपः । *सुशस्तिभिरिलांदद्वितीयायाम्* इलांदद्वितीयायां ऊर्जोनपाज्जातवेदः सुशस्तिभिरिति सकारलोपः *मानस्तरभिमाजमावर्त्तेथादौ लोपः* जमदग्नेरभीवर्त्ते मानस्तरभीत्यत्र उद्गीथादौ सकारलोपः मानस्तरभिमातये मानोहाउना इति आरंभः *परांगंवा* अथवा परांगं भवति । यथा धीमहे स्ता इति *सुहस्ता स्तावे ज्ञीयस्य लोपः* यज्ञायज्ञीये आजागृविर्द्वितीयायाम् । अक्षरसंसर्गे प्रस्तावे सुहस्ताता ३ सा ३ इति सकारलोपः *परांगंवा* परांगं वा सकारः ता ३ स्मा इति भवति । *इंद्रायेंद्विति-क्रौंचे वलोपः संधौ* इन्द्रायेंद्रायां क्रौंचे संधौ वकारलोपः । इन्द्रायेन्दा २ अ ३ हो २ इतिगतिं वान्तस्थामापद्यत इति गतिर्वकारोभवति तस्य वकारस्य मध्य इति लोपः संधौ गतिः । *उगतिर्विरते* विरामे उगतिरेव भवति *द्वियकारसंयुक्ते विविकृष्टे पूर्वोयकारः प्लुत आकारः संपद्यते रयिᳫंसोमश्रवा ३ आ २ याम्* पवस्व देव आयुषमित्यत्र द्वितीयाᳫंरयिᳫंसोम श्रवाय्यामिति पूर्वोयकारः प्लुत आकारः संपद्यते तदुदाहृतम् *यि-

द्यते रायिंसोमश्रवा १ आ २३ यांयिक्रौञ्चे निधन-
त्वात्यावा२माना२३ श्रवा२३४ यी२३४यां याशब्दः
कुण्डपाय्ये महेनायां च प्रणपात् कुण्डपाया२३याः
सत्यश्रवसि वाप्य अवृद्धस्तोभात्पर इकारः सम्प-
द्यते रायिंसोमश्रवौ३होवा हाइयाम् ॥ ६ ॥

अनुस्वारः स्पर्शः स्ववर्गीये प्रत्यये रेफस्पर्शो-
ष्मभिः संयुक्त एते शब्दास्त्रयोऽन्तः पदिकास्तोभव्य-

---

क्रौंचे निधनत्वात्या ३ वा ३२ माना ३३ श्रवा३३३ यी ३३३ या
३* अयंपूषाद्वितीयायां उत्तमे क्रौंचे पूर्ववदाकारे प्राप्ते प्रति-
षेधः निधनत्वात् । निधने हीषीस्थांसर्वत्रेति प्रकृताभाव
एव भवति *याशब्दः कुण्डपाय्ये महेनायां च प्रणपात् कुण्ड-
पाया ३३ या ३ सत्यश्रवसिवाप्ये* आतूनाकूपारे कुंडपाया
इति द्वियकारसंयोगात् पूर्ववत् आकारे प्राप्ते याकार एव भवति।
तथा महेनायां रायोवाजीये पूर्ववदाकारप्राप्तो यकारः *अवृद्धः
स्तोभात्पर इकारः संपपद्यते रा३यि ंसोमश्रवौ ३ होवाहा-
इया३म्* पवस्वदेवद्वितीयायां भासे अवृद्धस्तोभात्परः द्वियका-
रविकृष्टः पूर्वोयकार इकारमापद्यते ॥

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये तृतीयस्य षष्ठी
कण्डिका समाप्ता ॥ ६ ॥

*अनुस्वारः स्पर्शः स्ववर्गीये प्रत्यये रेफस्पर्शोष्म-
भिः संयुक्तएते शब्दास्त्रयोऽन्तः पदिकाः स्तोभव्यव-
हिताः सर्वत्रातिह्रियंते स्तोभांते विरते लोपः संधावलोपोव-
र्हिषि ततुराणाः पिशङ्गमीशानकृदघशंससरांसिंहृमं

वहिताः सर्वत्रातिह्रियते स्तोभान्ते विरते लोपः सन्धावलोपोवार्हिंषि ततुराणाः पिशंङ्गमीशानकृदघ-

---

इत्येवं जातीयानि* लोपालोपादनन्तरं अतिहारलक्षणं, तस्माद-तिहारलक्षणं वर्तिष्यते । अनुस्वारः स्पर्शः समानवर्गीये प्रत्यये पंचविंशतिस्पर्शाः समानवर्गा इत्यर्थः । रेफः स्पर्शोष्मभिः संयुक्तः स्पर्शोष्मप्रत्यय इत्यर्थः । ऊष्माणश्चत्वारः अन्तः पाद एते अनुस्वारस्पर्शरेफाः सन्तः स्तोभेन व्यवहिताः तेन स्तोभारंभेण सह सन्धीयन्ते, किन्तर्हि ? अतीत्यस्तोभं परेण स्पर्शेण ऊष्मणा वा सहैकीभवन्ति । यदा च स्तोभान्ते विरामो भवति तदैतेषां अनुस्वारस्पर्शरेफानां लोप एव भवति संधावलोपः । अतिहार एव भवतीत्यर्थः । उदाहरणानि । बर्हिषि प्रथमे पर्के अत्र भक्त्यन्तत्वात् नित्यविरतत्वात् तथा त्रिमात्रमन्तरमिति । कथमत्रातिहार इति । उच्यते । एके तावद्ब्रुवते संहिताध्यायपक्षेणैतद्द्रष्टव्यम् । अस्माकमपि संहिताध्ययनलिङ्गानि दृश्यन्ते । भद्रंसुषेषमूर्ज्जमिति । तथाऽपां गर्भोग्निरिडोति । अहमन्नादोऽहमन्नाद इति एवमादीनि । तस्मात्संहिताध्ययनं दर्शयति । अनेन ब्रुवते प्रदर्शितमेतत् । अन्यत्र यत्रैवं भवति तत्रातिहारो भवति । अपामिवेदूर्मायस्तर्त्तुराणाः मृज्यमानायां रयिंपिशंगं उत्तरौक्षोरंध्रवाजजितोः । ईशानकृतूआनोविश्वातृतीयायांश्यैते उद्गीथईशानकृदितितकारे ऋकारस्याभूतस्य रेफातिहारः । अघशंस यस्तेममदायां अध्यर्द्धेडे सोमसाम्नि अनुस्वारस्यातिहारः । अयंसरांसि माक्रमश्वे अनुस्वारातिहारः । संहद्वियंपंचायां आन्धीगवे । सखायो अद्रिसंहतमिति अनुस्वारस्यातिहारः । अत्रापि

शा३ंससरा३ंहम३ंहेत्येवंजातीयान्यतिहारप्राप्तं व्यञ्ज-
नं लुप्यत आन३ंशदेव्ये ज्योती३ंषि वृषं न ददर्शिवा-
रे वर्पसोदर्शतेलान्दे न्धसः स्वारेपर्णे प्रशा३ंसन्तिवि-
शीयांधीगवयोर्हिन्वन्तिविशीये मन्दानङ्गीर्भिर्जनित्रे
धर्म्मं दैर्घे विदुःसिष्ठ इंदवउक्थ३ंशीये कर्मवत्सास्वार्थ-

---

तदेव पर्कव्याख्यानं । महत्व३ंसोमाद्यायां दावसुनिधने । अ-
नुस्वारस्यातिहारः । इहापि तदेव पर्कव्याख्यानं ॥ एवंजाती-
यान्यन्यान्यपि द्रष्टव्यानि *अतिहारप्राप्तं व्यंजनं लुप्यते*
पूर्वलक्षणेनातिहारप्राप्तस्यापवादोवक्ष्यमाणेषूदाहरणेषु *आन३ं
शदेव्ये* एदुमधोर्द्वितीयायां उदान३ंशशेति अनुस्वारस्यातिहार-
प्राप्तस्यापवादः *ज्योती३ंषि वृषन्नदर्शिवारे* वारवन्तीये तंते-
मदद्वितीयायां येनज्योतीःषीति अनुस्वारलोपः । प्रत्युअदर्श्या-
यतीतिरेफस्यातिहारलोपः । त्रिष्वपि उद्गीथविषयः *वर्पसोदर्श-
तेळांदे* त्वेइषः संदधुर्भूरिवर्पस इति इळांदे रेफातिहारलोपः ।
तथा सदर्शतस्य वपुष इति रेफस्यैव *अंधसः स्वारे
पर्णे* स्वारसौपर्णे कयानायां द्वितीयायां म३ंहिष्ठोमत्सदंधस
इति अनुस्वारस्यातिहारलोपः *प्रशा३ंसंति विशीयांधीगव-
योः *विशाविशोवोअतिथिमित्यत्र विशोविशीयांधीगवयोः प्र-
शा३ंसन्ति उशस्तिभिरित्यनुस्वारातिहारलोपः *हिन्वंति विशी-
ये* विशोविशीये हिन्वंति सूरमुस्रय इति प्रस्तावे अनुस्वा-
रातिहारलोपः *मन्दानंगीर्भिर्जनित्रे* उत्तरे जनित्रे तंवो-
दस्माद्ययोः । आद्यायां अनुस्वारस्य द्वितीयायां रेफस्याति-
हारलोपः । *धर्म्मंदैर्घे* त्वोसोमांत्यायां दैर्घश्रवसे ऋतस्यधर्म्म-
न्निति रेफस्यातिहारलोपः *विंदुःसिष्ठे*शिशुंजज्ञानांत्यायां गो-

वणे सर्वं तदुकार्त्तयशे स्वरांतमेके विसर्जनीयान्तं वा-

---

विन्दुर्द्रप्सेति अनुस्वारस्यातिहारलोपः ॥ *इंद्वउद्रऽंशीये* आत्वात्रिशत्वंत्यायां अरंधामस्यइन्द्वद इत्यनुस्वारस्याति-हारलोपः । अत्रापि पर्क्कव्याख्यानं उपशब्देन व्यपेत-त्वात् । *कर्मवत्सासु* त्रिकद्रुकाद्यायां नित्यवत्सासु सईम-मादमहिकर्म्मेति रेफातिहारलोपः । इहापि पूर्ववदेव *आथ-र्वणे सर्वं* आथर्वणे अनुस्वारः रेफः स्पर्शः अतिहारप्राप्तः सर्वं लुप्यते परीतोषिसखायोदीर्घयज्ञायसन्तुमक्षूगोमन्तामादिषु । अत्र परीतोषायि अनुस्वारस्य पूर्वांगत्वात् लोपः । संधावलोप इति अयंचतासुतमिति एवं प्राप्तः । एवं प्राप्ते लोपः अनन्त्या-वचनासुतमिति एवं भवति सखायोदीरेफस्य विरामे लोपः सन्धावलोपः । आचार्यजिह्वायामिति प्राप्ते रेफलोपः । अत आ-वय्यजिह्वायामिति तथा यज्ञायसन्त्विवत्यत्र चोपकारे पूर्वाङ्ग-स्तोभान्ते विरामे लोपः सन्धावलोपः इति ज्योतिऽंसुवद्रा-या इति प्राप्नोति । एवं प्राप्ते अनुस्वारस्य विरामे लोपः क्रि-यते । तथा ज्योतिस्सुवद्राया इति भवति । उहुवाऊहाअहोवा-सखायोदायिउहुवाउंहाअहोवाआवव विरामे रेफस्य लोपः तथा आवद्व्यजिह्वायामिति भवति संधावलोप इति । अलोपे तु आवयजिव्हायामिति एवं मक्षूगोमाज्योतिस्तमीमहाइप्राप्ते लो-पः । ज्योतिस्तमीमहाभवति । एवंधुवंसऽंहितमध्ययनं दर्शयति । यथाद्ये पर्क्के । तदुक्तं पर्क्के *तंदुकार्त्तयशेस्वरान्तमेके विस-र्ज्जनीयान्तं वा* कार्त्तयशे पुरोजित्यंतायां तन्दुरोषमिति यथा-धीमहे तदूऋहोरोषमितिंविसर्ज्जनीयांतं वा तन्दुरोषमित्येवं तथा-सति तंदूरोषमिति भवति । अ शश्वच्छश्वत् । पवस्वम

स्वासु भरेयन्तुरंलोपः पूर्वाङ्गं वा कश्चित्पदान्तोलोपः प्राप्तोऽतिह्रियते कश्चित्पदान्तः पूर्वांगं प्राप्तोऽति ह्रियते वचनात्प्राक्स्तोभस्य स्वरांतोविरामः स्तोभांते विरते लोपः सन्धावलोपो निष्ठाअभयदिमायाᳲ सदो-

---

कालेये च यथाच क्रतुवित्तम इति च पदांतभावोद्रष्टव्यः *स्वासु भरे यन्तुरंलोपः* तंगूर्द्धयाद्वितीयायां स्वासु सौभरे अग्निमीडिष्वयन्तुरामिति अनुस्वारस्य अतिहारप्राप्तस्य लोपः सन्धावपि अग्निमीडिष्वया ३ हायितूरा ३ इति *पूर्वाङ्गं वा* आनन्तर्यसन्धिर्वा भवति । अग्निमीडिष्वयाᳲहायितू३ रा ३ इति एवं पूर्वांगभावः *कश्चित्पदान्तोलोपः प्राप्तोऽतिह्रियते कश्चित्पदान्तः पूर्वांगं प्राप्तोऽतिह्रियते वचनात्प्राक्स्तोभस्य स्वरान्तोविरामः स्तोभान्ते विरते लोपः सन्धावलोपः* । अन्तःपदिकानामतिहार उक्तः इदानीं पदान्तीयानामुच्यते । कस्य चित्पदान्तीयस्य लोपप्राप्तस्यातिहारः । अप्राप्तस्य वचनादब्रुवते । कस्य चित्पूर्वाङ्गप्राप्तस्य अनन्तरेण स्तोभेन आनन्तर्यसन्धौ प्राप्ते वचनादतिहारः प्राक्स्तोभस्य विसर्ज्जनीयस्य विसर्ज्जनीयपदान्तीयस्य स्वरान्तो विरामोभवति । स्तोभान्ते च अतिहृतस्य विसर्जनीयस्य रेफीभूतस्य लोपः सन्धौ तु अलोपः अतिहारोभवतीत्यर्थः । निगदव्याख्यातमेतत्सूत्रम् । पुरश्चोदाहरणानि *निष्ठाअभयदिमायाᳲसदोविशीयोत्सेधयोः* अभयदिमायां सदोविशीयोत्सेधयोः पूर्वे न तिष्ठति प्राक्स्तोभस्य स्वरान्तोविरामः ततोविसर्जनीयस्य सकारीभूतस्य स्तोभान्ते लोपः । सन्धौ अतिहारः । अस्य पूर्वाङ्गं प्राप्तस्य स्तोभेन सह आनन्तर्याव सन्धौ प्राप्तेऽति-

विशीयोत्सेधयोः कुवित्स्वासु मार्गीयवेऽचिक्र-
दत्पवमानाभ्यर्षसीत्यत्रकवणतरे पुरमजीजनोहिदे-
व्ये मदुरितायेददातिदेव्य उषर्बुधोग्ने विवस्वदे-
व्ये गिर्वणस्त्वयाभूषंति मानवे सत्पतिमिंद्रं वि-
श्वायां लेये जंभे चत्वामिद्धीत्यत्र मध्यमाउवाव्यव-

---

हारः यथा देवाह्वोपिगच्छोहोति *कुवित्स्वासु मार्गीयवे*
स्वासु मार्गीयवे कुवित्सस्य प्रहिन्वजमिति तकारस्य लोपप्रा-
प्तस्यातिहारः उवैकारयोरेकीभाव इत्यनेन *अचिक्रदत्पवमा-
नाभ्यर्षसीत्यत्र कण्वतरे* । कण्वरथन्तरे पवमानाभ्यर्षसीत्यत्र
वृषोअचिक्रदिति दकारस्य आउवाव्यवहितमितिलोपप्राप्तस्या-
तिहारः *पुरमजीजनो हि देव्ये* पर्यूषुद्वितीयायां गोजीरा-
याऽरँहमाणा पुरन्ध्येतिमकारस्य ओवौकारयोरेकीभावे लोप-
प्राप्तस्यातिहारलोपः *मदुरिताये ददातिदेव्ये* वामदेव्ये कस्त-
मिन्द्रान्त्यायां विश्वातरेमदुरितेति विसर्जनीयस्य रेफीभूतस्य
ओवौकारयोरेकीभावे लोपप्राप्तस्यातिहारः *उषर्बुधोग्नेविवस्वदे-
व्ये* अत्रापि उषर्बुध इति रेफीभूतस्य ओवौकारयोरेकीभावे लो-
पप्राप्तस्यातिहारः *गिर्वणस्त्वयाभूषन्तिमानवे* त्वामिदाद्यान्त्या-
यां उत्तरे मानवे सुतेष्विन्द्रगिर्वण इति विसर्जनीयस्य रेफीभूत-
स्य ओवौकारयोरनन्तरस्वरनीचाद्ययोरिति लोपप्राप्तस्यातिहा-
रः *सत्पतिमिन्द्रं विश्वायां लेये जंभे च त्वामिद्धीत्यत्र*
इन्द्रंविश्वायां वाजानांसत्पतिमितिकालेयवार्कजम्भयोः त-
कारस्य ओवौकारयोरेफीभावे लोप इति लोपप्राप्तस्याति-
हारः । वार्कजम्भे च त्वां वृत्रेष्विन्द्रसत्पतिमिति तकारस्य

हितं छिद्रमैधांजोरूपेष्वृतमाउवाव्यवाहितं पार्श्व-
संताछिद्रमैधांजोरूपाग्नेस्त्रिणिधनेषु ॥ ७ ॥

शवसः संजये सरद्गौतमे निष्कृतंᳲरुणसाम्नि-
वृषोअचिक्रायां वयुमपघ्नन्यवसायांकाक्षीवते ध्यम॰

---

पूर्वाङ्गप्राप्तस्यानन्तरसन्धिप्राप्तस्यातिहारः *मद्यमाउवाव्यवहितं-
छिद्रमैधाञ्जोरूपेषु* अभिसोमाद्यायां पवन्ते मद्यंमदामिति
मदशब्दस्यातिहारः । आउवाव्यवहितस्य अच्छिद्रमैधाञ्जोरूपे-
षु एतेषु च लोपप्राप्तस्यातिहारः । आउवा व्यवहितमाउभव-
तीति मकारस्य लोपप्राप्तस्यातिहारः । ओवौकारयोरनन्तरास्य-
योरिति । सर्वपादान्तं च व्यञ्जनं लुप्यते इत्यनेन *ऋत-
माउवा व्यवहितं पार्श्वसन्ताछिद्रमैधाञ्जोरूपाग्नेस्त्रिणिधनेषु*
राजादेवऋतं प्रहिन्वान ऋतमिति च आउभावप्राप्ते अति-
हारः गायत्रपार्श्वसन्तनि अछिद्रमैधतिथांजोवैरूपाग्नेस्त्राणिधनेषु ।

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये तृतीयस्य
सप्तमी कण्डिका समाप्ता ॥ ७ ॥

*शवसः सञ्जये* आते अग्नान्त्यायां उक्थेषु शवसस्पत इति
विसर्जनीयस्य सकारीभूतस्यातिहारः । अस्य पूर्वाङ्गं प्राप्तस्याति-
हारः अत्र च हीष्यादिषु निधनत्वादविरुद्धः सन्धिः *सरद्गौत
मे *प्रसुन्वानद्वितीयां गौतमे सरज्जार इति उवौकारयोरिति-
दकारस्य लोपप्राप्तस्यातिहारः *निष्कृतंᳲहणसाम्नि वृषो-
अचिक्रायाम्* मृज्यमानांत्यायां देवानां सोमपवमाननिष्कृत-
मिति षकारस्य पूर्वाङ्गं प्राप्तस्यातिहारः *वयुमपघ्नन्यवसायां
काक्षीवते* पवस्वदेवान्त्यायां काक्षीवते उदस्वादेवयुमिति प-

मैषिरे मरुत्पवमानोरथीतमायांकूलीयसंतानिषभेषु दूराद्धंतीये प्रथमे रसं मार्गीयवे हयत्त्वॅंसोमासिशांमदे द्रिॅंसवर्द्धितायां वितश्रृंगयो रुभयॅंस्वासु मेधातिथे संपवित्रायाॅंसामराजे तद्यज्जायथाद्विती-

---

कारस्यानुस्वारीभूतस्य ओवौकारयोरेकीभाव इति लोपप्राप्तस्यातिहारः *ध्यममैषिरे* अभिद्युम्नमैषिरे विकोशं मध्यमिति मकारस्यानुस्वारीभूतस्य ओवौकारयोरितिलोपप्राप्तस्यातिहारः। सर्वं पदान्त्यं च व्यंजनं लुप्यत इत्यनेन। *मरुत्पवमानोरथीतमायां कूलीयसन्तानिषभेषु* पवमानोरथीतमायां हरिश्चन्द्रोमरुद्दितिरोहितकूलीयसन्तानिपवमानर्षभेषु तकारस्य लोपप्राप्तस्यातिहारः आद्यन्तयोः ओवौकारयोरेकीभाव इति लोपः। मध्यमे आउवाव्यवहितमिति लोपः। *दूराद्धन्तीये प्रथमे* स्वासु प्रथमे वारवन्तीये सनोदूराच्चेति तकारस्य चकारीभूतस्य ओवौकारयोरनन्तरनीचाद्ययोरिति लोपप्राप्तस्यातिहारः *रसं मार्गीयवे* रसन्ते मित्रायां एकर्चे मार्गीयवे मकारस्यानुस्वारीभूतस्य ओवौकारयोरेकीभाव इतिलोपप्राप्तस्यातिहारः *हयत्त्वॅंसोमासिशांमदे* त्वंसोमाद्यायां शांमदे पवस्वमॅंहयद्रायिमितितकारस्य ओवौकारयोरेकीभावे लोपप्राप्तस्यातिहारः *द्रिॅंसवर्द्धितायां वितश्रृङ्गयोः* आजागृविरन्त्यायां अद्रिमिष्णन्निति गौरीवितगौश्रृङ्गयोः अद्रिमिष्णन्निति मकारस्य ओवौकारयोरेकीभाव इतिलोपप्राप्तस्यातिहारः *उभयं स्वासु मेधातिथे* स्वासु मेधातिथे अन्त्यायां मॅंहिष्ठमुभयाविनमिति मकारस्य आउवाव्यवहितस्य लोपप्राप्तस्यातिहारः *संपवित्रायां सामराजे*

यायां बृहद्रथंतरयोर्यच्छन्दस्तत्रैव बृहतीतरेप्रत्यस्मैद्वितीयाया मधस्त्विषीमायां च वत्सासूत्प्रशंसायां विशोयज्ञीययो श्चित्तदद्यायां वंतीये महदक्रान्वासिष्ठे रहस्ये च माभे मबृहत्यहिंस्वारेपर्वो यातः

---

ऋतास इद्वहन्तः समितिमकारस्य पूर्वाङ्गंप्राप्तस्यातिहारः *तद्यज्जायथाद्वितीयायांबृहद्रथन्तरयोः* यज्जायथाद्वितीयायां बृहद्रथन्तरयोस्तत्तेयज्ञ इतिदकारस्य ओवौकारयोरेकीभाव इतिलोपप्राप्तस्यातिहारः वन्तो ३ वा ३ तेयज्ञ इतिसंधिरपिप्रतिषेधः *यच्छन्दस्तत्रैव बृहति* तत्रैव यज्जायथाद्वितीयायामेव बृहति यज्जातं यच्चजंत्वमितिप्रतीहारे तकारस्य जकारीभूतस्य तृतीयादिन्यां ओहोवायामितिलोप्राप्तस्यातिहारः *इतरे प्रत्यस्मै द्वितीयायाम्* प्रत्यस्मै द्वितीयायां रथन्तरे आईमितिमकारगीतमुदाहरणम्। मकारओवौकारयोरेकीभाव इति लोपप्राप्तस्यातिहारः। रओ३वा ३ एनमिति *अधत्विषीमायां च वत्सासु* त्रिकद्रुकांत्यायां नित्यवत्सासु ईशब्दस्य पूर्ववल्लोपप्राप्तस्य मकारस्यातिहारः। अत्रापि पर्कव्याख्यानम् *उत्प्रशंसायां विशीयज्ञीययोः* विशोविशांसायां विशोविशीययज्ञायज्ञीययोः योदेवतात्युद्यतेति उच्छन्दे तकारस्य पूर्वाङ्गं प्राप्तस्यातिहारः *चित्तदद्यायांवन्तीये* तत्तेमदांत्यायां वारवन्तीये तदद्याविदिततकारस्य ओवौकारयोरितिलोपप्राप्तस्यातिहारः *महदक्रान्वासिष्ठे* अक्रान्त्यायां वासिष्ठे महत्तत्सोम इति तकारस्य तृतीयादित्यामोहोवायां चतुर्थस्थे वृद्धः पदान्तः सर्वत्र भवतीति लोपप्राप्तस्यातिहारः *रहस्ये च माभेमबृहति* माभेमायां बृहति महत्ते वृष्णो इति

पार्श्वेमोषुत्वायां नप्त्योः परिप्रियायांᳲषूक्तौर्णायव योर्ज्ञीये चर्षणीयऔजिष्ठायां ज्योतिरौपगवे पवमानोअजीजनायामर्वाङ्गिनलोपमेकेकावे विते श्रुतिं युक्वाहिकेशिनायामुभयतः प्रभोः शैखण्डिने हरि-

---

तकारस्य तृतीयादिनीमत्यपत्वाल्लोपप्राप्तस्यातिहारः *आहिंस्वारे पर्णे* उद्भेदभिद्वितीयायां स्वारे सौपर्णे अहिंचवृत्र-हेति मकारस्य आऊवाव्यवहितस्य लोपप्राप्तस्यातिहारः *घातः पार्श्वे मोषु त्वायां* मोषुत्वायायां गायत्रपार्श्वे मोषुत्वावाघतश्च नेतिचकारस्याउवाव्यवहितस्य लोपप्राप्तस्यातिहारः *नप्त्योः परिप्रियायां षूक्तौर्णायवयोः* परिप्रियायां गोषूक्तौर्णायवयोर्नप्त्योरिति रेफस्यातिहारः गौषूक्तओवौकारयोरेकीभाव-इति लोपप्राप्तस्यातिहारः। ऊर्णायवे पूर्वाङ्गप्राप्तस्यातिहारः *ज्ञीये चर्षणीयेयओजिष्ठायां* अयं पूषांसायां यज्ञायज्ञीये यःपञ्चचर्षणीरिति पूर्वाङ्गप्राप्तस्य रेफस्यातिहारः *ज्योतिरौपगवे पवमानोअजीजनायां* उत्तरौपगवे ज्योतिर्वैश्वानरमितिरेफस्य पूर्वाङ्गं प्राप्तस्यातिहारः *अर्वाङ्गिनलोपमेके कावे* । अबोध्यग्निर्ज्मांसायां कावे अर्वाङ्गिनचक्र इतिङकारयोरकीभाव इतिलोपप्राप्तस्य एकेऽतिहारं मन्यंते । ग्रन्थकारस्तु लोपमेव मन्यते *विते श्रुतिंयुक्वाहिकेशिनायां* गौरीविते गायन्तित्वायां कावेगिरामुपसुष्टुतिंचेति मकारस्य चकारीभूतस्य ओवौकारयोरेकीभाव इति लोपप्राप्तस्यातिहारः *उभयतः प्रभोः शैखण्डिने* प्रतआश्विनाःशैखण्डिने । धर्मंयते पवमानस्य प्रभोषेमत इति च पूर्वांगं प्राप्तस्य विसर्जनीयस्य उपध्मानीयभूतस्यातिहारः *हरिर्वीचशाक्वरर्षभे* । पवस्ववाजोत्तरयोः । शाक्वरर्षभे हरिंपवित्रे

वींचशाकेरेषभे ऽभीकेविपः स्वःसर्वत्र यथा स्वर्विदःशंकुनिसाहीये च स्वर्विदानामेंधे नस्वेप्रत्यये सिष्ठत्रैशोकयोश्च सिष्ठत्रैशोकयोश्च ॥ ८ ॥

अवृद्धादिपदांतात्स्वरे परे यकारोऽथवधीयत

---

पृथिव्रींचेतिमकारस्य पूर्वांगप्राप्तिस्यातिहारः । एवमादीनि दृष्ट्वा अन्यत्र प्रतिहार उच्यते *अभीकेविपः* प्रसोमासोविपश्चितइति अभीके पकारस्यातिहारः *स्वःसर्वत्र* स्वः शब्दे विसर्जनीयभूतस्य सर्वत्रातिहारः । यथा पवमानो अजीजनायां स२ंहित ज्योतिर्विश्व२स्वर्दृशमिति । अत्रप्राक्स्तोभस्य स्वरान्तोविराम इति स्तोभात्प्राक्स्वःशब्दे स्वरान्तोविरामः ततो निर्हृतस्य सतः स्तोभान्ते विरामे लोपः । सन्धावलोपः । इति सन्धावतिहारः *यथा स्वर्विदः शंकुनि साहीये च* यथा पवस्वमध्यमायां शंकुसत्रासाहीययोः अस्य पीत्वास्वर्विद इति रेफस्य ओवौकौरयोरेकीभावे लोपप्राप्तस्यातिहारः तथा *स्वर्विदानामेंधे* इन्द्रवाहास्वर्विदइति पूर्ववत् लोपप्राप्तस्यातिहारः *नस्वे प्रत्यये*- स्वः शब्दोविसर्जनीयः स्वःशब्द एव प्रत्ययेनातिह्रियते तद्व्याख्यातंपौक्तेचोत्तरइतिएतस्मिन्सूत्रे *सिष्ठत्रैशोकयोश्चसिष्ठत्रैशोकयोश्च* रेफस्यातिहारप्राप्तस्य लोपः । धत्र्यां वासिष्ठे स्वः सिषासन्निति त्रैशोके स्वःपत्तिर्यदीदृ्शइति ।

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये तृतीयस्य अष्टमी कण्डिका समाप्ता ॥ ८ ॥

अवृद्धादिपदान्तात्स्वरे परे यकारोऽयवधीयत उपदान्ताच्च

उपदानाच्च वकारोविकर्षे सर्वत्र तत्र चालोपः सन्धौ विरते लोपो बोधियात्रिवरूथ७ंसुवस्तया एवंजातीयानि नप्रतीनिवर्त्ते जठरेषूद्दत्कावववासि-

---

वकारोविकर्षे सर्वत्र तत्र चालोपः सन्धौ विरते लोपो बोधी या ३ त्रिवरूथ७ंसुवस्तया ३ एवंजातीयानि* अत्र लोपः निगदव्याख्यातम्। एवं अक्षरगौरवादि व्याख्यास्यामः। तत्रावृद्धादितिवक्तव्यः। वक्ष्यति परस्तात्। वृद्धात्परौ द्वौ लुप्ताविति परिशेषादेवं वृद्धादेव भविष्यति। तदुच्यते। कृतवृद्धिप्रसंगात्। किमुक्तं भवति? यत्र ह्रस्वस्याक्षरस्य द्विमात्रत्वं विधीयते सापि वृद्धिरिह विधीयते। ह्रस्वस्याक्षरस्य तत्रापि वैलक्षण्ये निवृत्तिर्माभूदिति अत इदमुक्तम् अवृद्धादिति। यथा तृतीयोच्चान्त्यं हि स्तोभे दीर्घं भवतीत्यारभ्य वक्ष्यति क्रौञ्चाभिनिधनसप्तहमयनुत्तरधर्त्तोद्वत्रासदस्यवेषुवृण्यादिः ह्रस्वं दीर्घीभवति। तत्रव्यवधानम्भवत्येवेत्यर्थः। यथा त्रासदस्यवेपुरोजित्युत्तरयोः चीयाधियेतितूवद्दया इति च तथा पयसि परिस्वानद्वितीयायां तूवंकवायिउपदान्ताचिसमासः, एवमेव वक्तव्यंगृयुभ्यां घोर इतिवत्। तदुच्यते। इपदान्तः क्वचिदन्तःपदिकस्यापि व्यवधानार्थम् ऋषभशाकरद्वितीयवत्। उपदान्ते च क्वचिन्निवृत्तिरित्यर्थः। यथा बार्हद्गिरद्वितीयायां वा३ सुवा३उवेति स्वरे एवतैवार्थः। सर्वग्रहणं पर एव स्वरेण समानस्वर इति यथा अभिइन्द्रा इति। अथवा परे अनार्चिक इत्येवं तत्। यथा ऋषभशाकरे मणिया३ इति। अथवा अकार एव परे क्वचित्। यथा इन्द्रापेंदोद्वितीयायाम् इषोवृधीये सत्वामा३र्जाति आपा वा इति। अकार एव परे अथवाऽऽद्यन्तस्थपरत्वाल्लोपः सर्वग्रहणं संयोगविकर्षपदान्तीयो

छाभिक्रंदार्केषु पृणक्तुमहामित्रत्वाष्ट्रीवितेषु येत्वा-
मृजंति लौशशैखण्डिनयो रदर्शिश्रुध्ये वृत्रेषु सप्त-
हे म्यन्तस्थपरे तुलोपो यथाकाष्ठासुनरस्त्वांकाष्ठासु

---

पदांतीयाधिकारार्थम् । तथावृद्धात्परौ यौ लुप्ताविसत्र ॐआवि-
विरते विलोप एवेति सर्वग्रहणं अलोपः संधिर्विरते लोप इति ।
उभयवचनं किमर्थमिति अन्यतरवचने परिशेषादन्यतरासि-
द्धिरिति ? उच्यते । कार्यार्थं पुनरेव वचनं । संभावलोप इत्युच्य-
ते । (सध्यं लोपप्रदर्शनात) । पर्यूषु प्रधन्वेति पुरोजितिवत् । वि-
रते लोप इत्युच्यते । विरते ष्यलोपदर्शनात् । कईवेदाद्ययामा-
ष्कारणिधने शिप्रियंधासा इति *नप्रतीनिवर्त्ते* त्वर्मिंद्रयशाद्यायां
प्रतीत्येक इति व्यवधानप्रतिषेधः । अत्रविरामे न भवतीत्यर्थः
*जठरेषूद्रत्कावबासिष्ठाभिक्रंदार्केषु* । धर्त्तात्यायां भविष्यमाणो
जठरेष्वितिउद्वद्धार्गवकावबासिष्ठत्रायोरभिक्रंददीर्घनामसोर्केषु व्य-
वधानप्रतिषेधः । भविष्यमाणे इति विरामप्रतिषेधः *पृणक्तुमहा-
मित्रत्वाष्ट्रीवितेषु* असाविसोमइंद्राद्यायां पृणक्तिति महान्वैश्वामि-
त्रस्वारसाम्नीत्वाष्ट्रीसाम्नोगौरीविते च व्यवधानप्रतिषेधः *येत्वा-
मृजंति लौशशैखण्डिनयोः* प्रत आत्वाद्यायां येत्वामृजंत्यषीति-
लौशशैखण्डिनयोर्व्यवधानप्रतिषेधः *अदर्शिश्रुध्ये* प्रत्युअदर्शी-
तिश्रुध्ये व्यवधानप्रतिषेधः *वृत्रेषु सप्तहे* त्वामिद्ध्याद्यायां सप्त-
हत्वं वृत्रेष्विति व्यवधानप्रतिषेधः *म्यन्तस्थपरेतु लोपो यथा का-
ष्ठासु नस्त्वां २ काष्ठा २ सुआ ३र्वतः* द्वे अन्तस्थे यस्य सं-
योगस्य परतः सम्यन्तस्थपरःर्वतशब्दःतस्मिन्म्यंतस्थपरे व्यवधान-
प्रतिषधः । तदुदाहृतम् । तथा एनाविश्वान्यत्रमहीयत्रस्वारसैन्धु-
क्षितसाकमश्वादिषु च । अत्र च वाहूकभाष्यकारेण म्यंतस्थपरेतु

आ २ र्वतः स्तोभव्यवहिते त्व लोपोद्यन्तस्थपरे यथा- भीकषूक्तयोरैटते त्वभ्यासे प्रत्यये वृद्धात्परौ स्वौ- लुप्तौ तंत्वागिरः सुष्टुतयोवाजया २३ तिआजिन्न- गाइसूरौआ २३४ क्तूषूआएवंजातीयानि नभूम्युः चासंचारे स्वायुधोग्रेसिंधूनां मरुतां धेनौ स्वास्वौ-

---

लोप इति द्यंतस्थसंयोगपर इति व्याख्यानं कृतं, ऊहसमा- म्नाये तथा दर्शनात। अस्मद्गुरवस्तु यथासूत्रमेव मन्यंते । संत्वा- मृजंसायव इति एवमादिप्रसिद्ध्यर्थं (ऋ २ हो ३ एवमादिषु २ रे २ व १ तीर्ना २ ऋ २ हो ३ हा ३ ई १ इन्द्रा ३ अ १ त्वं १ नत्वा २ सांत्वा २ मृजं १ ता ३३३ इ १ अ १ वा ३ हा इ३संचा २३१ हा २ मृ १ जं १ ति १ आ ३३ प १ वा ३ अत्रद्यंतस्थपरः।) रेवतीदार्यऽच्युतवारवन्तीयादिषु *स्तोभव्यव- हिते त्वलोपोद्यंतस्थपरे यथाभीकषूक्तयोः* स्तोभव्यवहिते संयोगे द्यंतस्थसंयोगपरेपि व्यवधानं भवत्येव *ऐटते त्वभ्यासे प्रत्यये* उच्चान्त्यायामैटतेऽभ्यासे प्रत्यये सनाविश्वान्यर्यइत्यत्रव्यवधानलो- पः *वृद्धात्परौस्वौलुप्तौ तंत्वागिरः सुष्टुतयोवा २ जया ३३३ ति आजिन्नगा ई ३३ सू ३ रो ३ आ २३४ क्तू २ षू आ ३ एवं- जातीयानि* वृद्धादिपदांतादुपदांताच्च व्यवधानलोपः । तदु- दाहृतम्। यथा परीतोष्यायायां दधन्वाङ्योनर्योअप्स्वति कौल्म- लबर्हिषदैर्घश्रवसांधीगवादिषु । तथा मत्युअदर्शीति वारवन्तीय- वामदेव्ययोः *नभूम्युच्चासञ्चारे* उच्चायायामिडासञ्चारे दि- विसद्भूम्याददइति वृद्धात्परादपि न प्रतिषेधः *स्वायुधाग्रेसिंधू- नां मरुतां धेनौ* ज्योतिर्यज्ञांसायां मरुतां धेनौ स्वायुधःसोतृभि- रिति नव्यवधानप्रतिषेधः *स्वास्वौशने च* औशने च स्वासु

शने च स्वश्वोनाकिष्ठद्रथायां प्रियासितयोर्मदेष्व-
स्येदिंद्रायाꣳष्कलदासयोर्यज्ञाय संतु सर्वत्र बृहद्रा-
त्सप्रवैराजपदनिधनश्रुद्धीयवर्जं नदीषु प्रियः सूनायां
यौधाजयद्वैगणवतरेषु धर्त्तायां काववासिष्ठाभिक्रंदेषु
सुतेषु त्वया भूषायां माधुच्छन्दसमानवयो द्युम्नीप्रमꣳ
हिष्ठीये वनेष्वर्षासोमायाꣳशाकलवार्शसंतनिवर्ण-
हरेषु ॥ ९ ॥

---

पूर्ववदप्रतिषेधः । सू ३ वा ३ यूश्यः पवते २ दा ३ ई *स्व-
श्वोनाकिष्ठद्रथायां प्रियासितयोः *इममिन्द्राद्वितीयायां वसिष्ठप्रिया-
सितयोः नःकिनस्वश्व इति न प्रतिषेधः *मदेष्वस्येदिंद्रायाꣳष्क-
लदासयोः* इंद्रमच्छांत्यायां पौष्कलदैवोदासयोः अस्येदिन्द्रो-
मदेष्विति न प्रतिषेधः *यज्ञाय सन्तु सर्वत्र* यज्ञाय संत्विति
सर्वसामसु वृद्धात्परादपि न प्रतिषेधः *बृहद्रात्सप्रवैराजपदनिधन-
शुद्धीयवर्ज्जम्* एतेषु उत्सर्ग एव भवति लोप इत्यर्थः *नदीषुप्रियः
सूनायां योधाजयद्वगणवतरेषु* प्रसोमदेवांत्यायां योधाजयद्वैगत-
कण्वरथंतरेषु नदीष्विति व्यवधानप्रतिषेधः *धर्त्तायां कावत्रासिष्ठा-
भिक्रंदेषु *धर्त्तायां काववासिष्ठयोराभिक्रंदेषु सिक्तुणुषेनदीष्वेति
व्यवधानलोपः *सुतेषु त्वया भूषायां माधुच्छन्दसमानवयोः*
त्वामिदान्त्यायां माधुच्छन्दस उत्तरमानवयोः सुतेष्विन्द्रगीतिव्यव-
धानम् * द्युम्नीप्रमꣳहिष्ठीये* प्रमꣳहि द्वितीयायां द्युम्न्याहुत
इति व्यवधानम् *वनेष्वर्षासोमायाꣳशाकवार्शसन्तनिवर्ण हरेषु
*आर्षसोमायां शकलवार्शसन्तनिशक्करवर्णवार्ष्वार्षाहरेषु सिदीन्यो-
नौवनेष्वितिव्यवधानमेवा ॥ ० ॥

इति पुष्पसूत्रभाष्ये तृतीयस्य नवमी कण्डिका समाप्ता ॥९॥

पृष्ठेषु सुज्ञाने स्वाध्यःसोमाः पवंतायां वित-मधुनिधनांधीगवेषेधज्ञीयेषु संवत्सरेणेषु प्रबोधियोयां प्रवल्लौशसारथ्ययामीवसु वसुन्यपवमानरुचायां वि-शीये मर्त्येषु दानायवार्यायां लेयश्रायन्तीययोः कविमिवायां चौशने व्यश्नुहिसंक्षारे पिबात्वस्यव-र्त्ताभिनिधनयो रवंत्यस्य सामराजे स्वस्तयेद्विज्ञी-

---

*पृष्ठेषु सुज्ञाने* वृद्धात्परोक्षौ लुप्तावित्यस्योत्सर्गस्यापवा-दाधिकारः प्रकृतः स एवानुवर्तते । वृद्धादपि परौष्ठोधौ न लुप्येते प्राणाशिशुरन्त्याया स्सुज्ञाने पृष्ठेष्वैरयदिति व्यवधान-मेव च *स्वाध्यः सोमाः पवन्तायां वितमधुनिधानान्धीगवेष-धयज्ञीयेषु* सोमाः पवन्तायायां गौरीवितमधुश्चुन्निधनान्धीगव-निषेधयज्ञायज्ञीयेषु स्वाध्यमेव व्यवधानमेव *संवत्सरेणेषुप्रबोधि-यायां प्रवल्लौशसारथ्यायामीवसु* प्रोअयासीद्वितीयायां पनस्युवः संवरणेष्विति प्रवद्भार्गवलौशयज्ञसारथीन्द्रस्यायामीवसुव्यवधानमेव *वसूनि पवमानरुचायां विशीये*पवमानरुचायां विशोविशीये विश्वावसूनि इति व्यवधानमेव *मर्त्येषुदानायवार्यायां लेपश्रा-यन्तीययोः* अच्छानः शीरशोतृतीयायां कालेयश्रायन्तीययोः द्वितीयोभूदमृतोमर्त्येष्विति व्यवधानमेव *कविमिवायां चौशने *प्रेष्ठं वोद्वितीयायां गायत्रीसामौशने निमर्त्येष्विति न व्यवधा-नलोपः *व्यश्नुहि संक्षारे* पवमानस्य जितृतीयायां इच्छासं-क्षारे पवमान व्यश्नुहीव्यवधानमेव *पिबात्वस्यवर्ताभिनिध-नयोः* आत्वासहस्रमान्त्यायां अभीवर्ताभिनिधनयोः पिबा-त्वस्य गिर्वण इति अलोपः *अवन्त्यस्य सामराजे* पवि-त्रं मध्यमायां सामराजे अर्चन्ते अस्यतन्तवो व्यस्थिरन्निति

ये दीयाज्ञीये स्वाहुतः सदुद्रवायां वारदेव्ययो बृह-
ति च गीथे दीर्घवृद्धोपहितद्विपदांतआयिभूतोका-
राकारयोः प्रत्ययपोः संधौ यकारमापद्यते गतिर्वि-
रतेवायख्यंद्रो ३२३ पवमानाभा ३ यार्षा ३ सा३एवं-
जातीयानि नार्षसिपुनानायां यथा गौंगवाभीवर्त्तयो-

---

न व्यवधानलोपः *स्वस्तये दविद्वीये* दविद्युतृतीयायां यज्ञा-
मयज्ञीये ऋधकूसोमस्वस्तये इति न व्यवधानलोपः *दीयाज्ञीये*
वृषामतीप्रथमायां यज्ञायज्ञीये इन्द्रस्य हार्देति अलोपः *स्वा-
हुतः सदुद्रवायां वारदेव्ययोः* एनावोतृतीयायां वारवन्तीय-
वामदेव्ययोः सदुद्रवत्स्वाहुत इति न व्यवधानलोपः *बृहति
च गीथे* बृहति च उद्गीथविषये स्वाहुत इति व्यवधानमेव
*दीर्घवृद्धोपहित इतपदान्त आयिभूतोकाराकारयोः प्रत्यय-
योः सन्धौ यकारमापद्यते गतिर्विरतो वा ३ यख्यद्रो ३२३३
पवमान ३ भा ३३ यार्षा ३३ मा ३ एवं जातीयानि* दीर्घ-
पूर्वोवृद्धः पूर्वश्च इपदान्त आइभूत अकारआकारयोः सन्धौ
यकारमापद्यते विरतेगतिर्भवति तदुदाहृतम्। अत्राहि गतिश्चा-
न्तस्थामापद्यते इति यकारापत्तिरमध्य इति लोपः पुनरनेन-
वचनेन भोगपकारौभवतीति एषां बाहूकभाष्यकारेण व्याख्या-
नं कृतम्। अस्मद्गुरवः ब्रुवते अनेनग्रन्थकारेण स्वयमेव भोग-
षय उक्तः एकारादकाराचभोग इति आच्छिकानामपि नैव
इकाराद भोग उक्तः तस्मादेकाराद भोगोभवतीति अत्र यथा-
भिप्रेतं ग्राह्यम्। *नाअर्षसि पुनानायां यथा गौगवाभीवर्तयोः*
पुनानायां गौगवाभीवर्तयोः अपोवसानो अर्षसीति पूर्वक्ष-

भवीयसीप्रमंऽहिष्ठीये चर्चत्युद्वंऽशपुत्रे विश्वान्यर्ये-
आपर्णैटतबोधीयर्षभेष्विंद्रायछंतिस्रुचश्चरंतिनैये दाधि-
यज्ञीयक्रौंचयोः स्याश्विनोर्बोधीये ऽधाह्यग्नेकमश्वेस्यं-
तमासहोदैर्घर्षभयोर्वराणिज्ञीयश्यावाश्वयोरेकारे च

---

यकारप्राप्तस्य प्रतिषेधः *भवीयसीप्रमंऽहिष्ठीये* प्रमंऽहिष्ठा-
न्त्यायां भावीयसीति यकारप्रतिषेधः *अर्चन्त्यद्वंऽशपुत्रे* अ-
र्चन्त्यर्कमिति यकारप्रतिषेधः *विश्वान्यर्यआ पर्णैटतबोधीय-
र्षभेषु* उच्चान्त्यायां सौपर्णे टतबोधयिपवमानर्षभेषु विश्वान्य-
र्य इति यकारलोपः *इन्द्रायच्छन्ति स्रुचश्चरन्तिनेनैये* य-
दिन्द्रयाकूअन्त्याया इन्द्रयच्छेतियकारलोपः । अग्न आयाहिम-
ध्यमायां स्रुचश्चरन्तीति इयदान्तस्य दीर्घवृद्धोपहितस्य अकारे
अकारप्रत्ययस्य च सन्धौ यकारप्राप्तस्य च प्रकारप्रतिषेधः ।
एवं सर्वोदाहरणेषु द्रष्टव्यम *दाधियज्ञीयक्रौञ्चयोः* सोमाः प-
वन्तमध्यमायां यज्ञायज्ञीयक्रौञ्चयोः सोमासोदध्याशिर इति य-
कारप्रतिषेधः *स्याश्विनोर्बोधीये* प्रतिष्यान्त्यायां उतसरवा-
स्यश्विनोरिति यकारप्रतिषेधः *अधाह्यग्नेकमश्वे*अग्नेतमद्यमध्य-
मायां साकमश्वे अह्यग्नि इति यकारप्रतिषेधः *सान्तमासहोदै-
र्घर्षभयोः* श्रुधीहवायां सहोदैर्घवैराजर्षभयोः कृष्णाद्रुवाऽंपीति-
यकारप्रतिषेधः *वराणिज्ञीयाश्यावाश्वयोः* सोमः पवते तृतीया-
यां यज्ञीयत्रैष्टुश्यावाश्वयोरन्तः पश्यन्त्जनेमावराणीयकारप्रति-
षेधः *एकारे च यकारं यकारंयामोद्गुनोर्गतिमाँश्चपदान्तः स-
न्धौयलोपोविरतेरमता २ इये २ स्यापरा २ इये २२ वमता इये
२२* दीर्घवृद्धोपहित इत्यनेन लक्षणप्राप्तस्य विशेष उच्यते ऐ-
डयामउद्वद्धार्गवयोः असाविसोमाशुंजज्ञानं तृचयोः पुनानोवा-

यकारंयामोद्धतोगंतिमांश्च पदांतः संधौ यलोपो विरतेरमतोयियेरे३ स्यापरोयिये २३ त्रमतोयियेर३ एकाराद:काराच्चभोगः क्वचिदिकारादोवौकारयोरेकीभावेलोपः ॥ १० ॥

वृद्धमंतः पदे तालव्यमाभवति हादौ स्तोभेप्रत्यये प्रतिभागन्तदा२३हा३यिपर्मी२०वयममृतंजा-

---

रमत्ये इति पूर्वलक्षणेन रमता ३ इ ३३ एवं प्राप्ते अत्रविशेषः गतिमानादान्तोभवति रमना इये ३३ एषविशेषः । परेष्वप्युदाहरणेष्वेवमेव इष्टव्यम् *एकाराद: काराच्चभोगः* यकारोभवति शुक्रं पूर्वस्गनं भजन इति भोगः उदाहरणम् एह्युसाकमश्वे राभिर्वर्धासइन्दुभिरिति सकारेमध्यमयः ययावामिति यकारपयस ,इन्दुरितिस्थितेरमध्य इति यकारलोपः बर्धासइन्दुभिरितिस्थितेभोगयकारः एकाराद्भोगः अकाराच्चनिद्धः शुक्र आहुत इति अत्र अस्थाद्यमिति विसर्जनीयस्य यकारापत्तिरमध्य इति लोपः ततो ऽकार्यां इत्यत्र यकारो भवतीति भोगः *क्वचिदिकारादोवौकारयोरेकीभावे लोपः* ओवा अकारश्च ओवौकारौ तयोरोवौकारयोरेकीभावेलोपः उदाहरणम्—उवायाः सनोमहो वा, अकारो दाहरणम् कुनोहो ३ वोति ।

इति पुष्पसूत्रभाष्ये तृतीयस्य दशमी कण्डिका समाप्ता ॥

*वृद्धमन्तः पदेतालव्यमाभवति हादौस्तोभप्रत्यये प्रतिभागं तेदा ३३ हा ३ ३ इपर्मी ३ वयममृतं जाता ३३ वा ३ हुं ३ मायि महा हास्तीदक्षा ३ ३ हो ३ यि एव जातीयानि *भावाः प्रकान्ताः तत्र अतिहारान्ताव्याख्याताः इदानींक्रमप्राप्त आभावः स इदानीमुच्यते । कस्मिन्प्राप्ते इदमारभ्यते । ताल-

ता२३वाहुंमायिमहाहस्तीदक्षा२३होएवंजातीयानि न-
हिन्वितवद्यौरिंद्रायंःसौभरे ऽचिक्रमृज्यमानायांःरं-
ध्रोतरवाजजिन्मंतेष्विव वदुहानायां पृश्निमंतयोगायं-
तित्वायां च त्वाष्ट्रीसाम्नि कनितिस्रोवावायांःसैंधु-
क्षितौशनयोः संःहितेत्वाभवति वारे सर्वत्रांतःप-
दं ना भवति स्वास्वाभवतिनिमत्त्यांद्वनेविष्णुव

---

व्यमायियद्वृद्धमिति वृद्धस्य तालव्यस्य आईभावः प्राप्तः तत्रा-
न्तःपदिकस्य तालव्यस्य हकारस्तोभप्रत्ययेस्य अयं विशेषः
आभावोभवति न गातिरित्यर्थः । तदुदाहृतम् सौभरयज्ञायज्ञीय-
राज्याकूपारेषु *नहिन्वितवद्यौरिन्द्रायांःसौभरे* पूर्वलक्षणप्रा-
प्तस्यापवादः वृद्धस्यान्तःपदिकस्य हादिस्तोभप्रत्ययेस्य ताल-
व्यस्य आभावप्राप्तस्य प्रतिषेधः उत्सर्ग एव प्रतिश्रूयतेगातिरेव-
भवतीत्यर्थः । तत्रद्यौरिन्द्रायां सौभरे त्वामापः पूर्वतासश्च हि-
न्वीति आभावप्रतिषेधः *अचिक्रमृज्यमानायांःरन्ध्रोत्तरवाज-
जिन्मन्तेषु* मृज्यमानद्वितीयायां अक्ष्योरन्ध्रउत्तरवाजजिन्मन्तेषु
वृषो अवीति आभावप्रतिषेधः *इवदुहानायां पृश्निमन्तयोः*
तवाहंःसोमान्त्यायां पृश्निसमन्तयोः शकुना इवेति अनाभावः
*गायन्तित्वायां च त्वाष्ट्रीसाम्नि* गायन्तित्वायायां द्विषन्तु-
र्तमेत्वाष्ट्रीसाम्नि उद्वंःशमितेति अनाभावः । *कानितिस्रोवाचा-
यांःसैन्धुक्षितोशनयोः* तिस्रोवाचायां सैन्धुक्षितगायत्रीसामौ-
शनयोः हरिरेतिकनीति अनाभावः *संःहितेत्वाभवति* । स-
ंःहिते तुकानिशब्दः आ भवति *वारे सर्वत्रान्तः पदं ना
भवति ।* उत्तरे वारवन्तीये तालव्यस्यान्तः पदिकस्य सर्वत्राना-
भावः । यथा एह्युष्वाग्नान्सयोः । अप्ना भुवन्ने इति च

इत्येतौ शब्दावर्षासोमायाᳫशाकले वरिवः सन इ-
न्द्रायां कौत्से पव्यध्वर्यो साके सवीरायां वैश्वामित्रे
डिनद्वितीयायां त्वाᳫरिहंतीत्यत्र च त्वाष्ट्रीसाम्नि
रभिसुषावसोमायाᳫरौरवे रहस्ये च संकृतिनि गौ
शृङ्गेस्वर्विदः सुम्नेषु मानस्तरभीत्यत्रजमवर्त्तेषेधयो
र्माशिवासः प्रहिन्वान इति च पूर्वे जनित्रे गीर्भिरुत्त-

---

*स्वास्वाभवतानिमत्सर्यात्* स्वासु वारवन्तीयोत्तरे निमत्सर्यादि-
ति अनाभावः *वनेविष्णुव इत्येतौ शब्दावर्षासोमायाᳫशाक-
ले* अर्षासोमाद्यमयोः शाकले सीदन्यौवने ताल्वव्यस्यान्तःप-
दिकस्य सोमाअर्षन्तुविष्णवे अनाभावः *वरिवः सन इन्द्रायां
कौत्से* उच्चाद्वितीयायामैडकौत्से वरिवोवित्परिस्रव इत्य-
नाभावः *पव्यध्वर्योसाके* अध्वर्याप्रथमायां धुरासाकमश्वे
सोमस्पवि इत्यनाभावः *सवीरायां वैश्वामित्रे* प्रसुन्वाना-
स्यायां वैश्वामित्रे पविशब्द एव हरिः पवित्रे इत्यनाभावः ।
*डिनद्वितीयायाम्* । पविशब्दएव यदीपवीतिमतआशिवाद्विती-
यायां शैखण्डिने अनाभावः पविशब्दस्य *त्वाᳫरिहन्तीत्यत्र-
त्वाष्ट्रीसाम्नि* पविशब्द एव पवस्वनाद्वितीयायां उत्तरेद्विषन्-
तन्तेत्वाष्ट्रीसाम्नि हरिपवीति अनाभावः *रभिसुषावसोमाया
ᳫरौरवे* परीतोषिं द्वितीयायां रौरवे अदब्धः सुरभीति अना-
भावः *रहस्ये च सङ्कृतिनि* रहस्याविषये च संकृतिनि अदब्धः
सुरभीत्यनाभावः *गौशृङ्गे स्वर्विदः* आजागृवितृतीयायां गौ-
शृङ्गे स्वर्विदोअभिगा इत्यनाभावः *सुम्नेषु मानस्तरभीत्य-
त्रजमवर्त्तेषेधयोः* पिबासुतान्स्यायां जमदग्नेरभीवर्त्तनिषेधयोः
आनः सुम्नेष्वित्यनाभावः *माशिवासः प्रहिन्वान इति च पूर्वे

रे श्रीणाहविषे सवाज्यक्षायां भ्रवेजिपवमानस्य जिघ्रतायां च व्यवधयदिमायामुत्सेधे हिन्वाभिसोमायां तुनिभीशवयो र्दीर्घनिषेधे पुरोजित्यां जम्भस्वरयोरनाभावस्तालव्यस्यान्तःपदिकस्य दीर्घशब्दस्त्वाभवति पुरोजित्यां जम्भेस्वरेचाभवाति सहा-

---

जनित्रे* पूर्वे जनित्रे इन्द्रक्रामध्यमायां माशिवासइत्यनाभावः। तथा अभिसोमान्त्यायां प्रहिन्वान इत्यनाभावः *गीर्भिरुत्तरे* उत्तरे जनित्रे तत्रोदसममध्यमायां इन्द्रगीर्भिरित्यनाभावः *श्रीणा हविषेसवाज्यक्षायां* प्रवाज्यक्षाद्वितीयायां सौहविषेगोभिः श्रीणान इत्यनाभावः *भ्रवे जिपवमानस्य जिघ्रतायां* नतनिधने वाभ्रवे पवमानस्य जिघ्रतायां पवमानस्यजिघ्रान्त्यायां जीराम्ब जीत्यनाभावः *व्यवधयदि मायामुत्सेधे*प्रत्नपीयूतृतीयायामुत्सेधेदुमाचवीत्यनाभावः *हिन्वाभिसोमायान्तनिभीशवयोः* अभिसोमान्त्यायामाभीशवसन्तनिनोः प्रहिन्वान इत्यनाभावः *दीर्घनिषेधे पुरोजित्यां* पुरोजितीप्रथमायां निषेधे सखायोदीर्घजीत्यनाभावः *जम्भस्वरयोरनाभावस्तालव्यस्यान्तःपदिकस्य* बृहन्निधने वार्कजंभे प्रथमे च स्वरे अनाभावः तालव्यस्यान्तः पदिकस्य यथा बृहन्निधने वार्कजम्भे त्वामिध्युत्तरयोः। सत्वं न श्चित्रगामश्वꣳरथ्यमिन्द्रेति च । तथात्वꣳह्येहि चोत्तमायां। आपुरन्दरञ्चकृमावीति अनाभावः। स्वरे च प्रथमे प्रत्यस्मै आद्ययोः विश्वानि विइन्द्रꣳसुतेभिरिति च *दीर्घशब्दस्त्वा भवति पुरोजित्यांजम्भे* पुरोजित्यायां जम्भे अपवादः *स्वरे चाभवति सहावां इन्द्रेत्येषशब्द आनस्तेगंतुमस्तुरइत्यत्र* पूर्ववदपवादः। मत्स्यपायिद्वितीयां सहावाडइन्द्रेत्याभावः *अ-

वा॑ऽइन्द्रेत्येषशब्द आनस्तेगन्तुमासरइत्यत्रावृद्धम-
ध्याभवति जितीयोदीक्रौञ्चे षिपरीतायां माधुच्छन्दसौ
वरिवःसन इन्द्रायां मार्गीयवे जरिस्वारे पर्णे मदिन्त-
मदिष्ठनोगिहाविष्कृते यिन्नावश्विनोर्व्रतोत्तरे ॥ ११ ॥

पदान्तश्चाभवति मातेग्नेतमद्यायांक्रमश्वे ध्यैनौ-
वारोत्तरे ज्ञीयेस्यन्दतेकृणवते चर्षणीरधीत्पर्षिहावि-
ष्कृते वरिवोधायां नुव्यभीनः कौत्से वृधेस्माऽपिबासु-

---

वृद्धमध्याभवति* वृद्धस्यान्तःपदिकस्य तालव्यस्य हादिस्तोभ-
प्रत्ययस्याभाव उक्तः । अथेदानीमवृद्धस्याभावः हादिस्तो-
भप्रत्ययस्योच्यते । अपिशब्दादंतःपदिकस्याभाव उच्यते व-
क्ष्यमाणेषूदाहरणेषु *जितीयोदीक्रौञ्चे* मध्यनिधने ऐन्द्राक्रौ-
ञ्चे पुरोजित्यां पुरोजितीसखायोदीतिचाभवति । *षिपरीता-
यां माधुच्छन्दसे* षिपरीतायां माधुछन्दसे षिशब्दः अवृद्धो-
ध्याभवति *वरिवः सन इन्द्रायां मार्गीयवे* उच्चामध्यमायां
मार्गीयवे वरिवइत्याभावः *जरिस्वारपेर्णे* कयानश्चित्रान्त्या-
यां स्वारसौपर्णे अचिताजरीत्याभावः *मदिन्तमदिष्ठनोगि-
हाविष्कृते *हाविष्कृते त्व॑स्सुतोमदि स्वादिष्ठयामदिपरिस्वानो-
गिएतेष्वाभावः *यिन्नावश्विनोर्व्रतोत्तरे* उत्तरे अश्विनोर्व्रतेयि-
न्तवे इत्याभावः ॥

इति पुष्पसूत्रभाष्ये तृतीयस्य एकादशी कण्डिका ॥ ११ ॥

---

*पदान्तश्चाभवति* अन्तः पदिकानामाभाव उक्तः । अथे-
दानीं पदान्तीयस्याभाव उच्यते *मातेग्नेतमद्यायाक्रमश्वे* स्वा-
रसाकमश्वे अग्नेतमद्यायां ऋध्यामात इत्याभावः *ध्यैनौवा-

तायां पृष्ठजमवर्तयोः पवन्तेभिसोमायां मैधातिथे नि-ष्कृत‍ंरुणसाम्निवृषो अचिक्रायां परीतायां च परि-स्रवा ऽधिसोमउष्वावाम्रे सुष्वाणायां चान्धीगवे ऽभिप्रिज्ञीयेचोक्तः कृपेस्वासुनैपे विदइन्द्रसुतायामु-

---

रोत्तरे *उत्तरे वारवन्तीपे स्वासु वन्दध्याइत्याभावः *ज्ञीये स्यन्दते कृण्वतेचर्षणीरधीव* यज्ञायज्ञीये पुरोजिद्द्वितीयायां परिप्रस्पन्दत इत्याभावः तथा अन्त्यायां पूर्वोत्तरयोः अयं पूर्षोत्तरयोः सोमासः कृण्वतेयः पञ्चचर्षणीरिति च । अभिप्रि-याणितृतीयायां अभीरऋतस्य दोहनाअनूषातायीत्याभावः । प-रित्यंहर्यतप्रथमायांयोदेयां विश्वाइत्याभावः *पर्षिहावि-ष्कृते वरिवोधायां* स्वादिष्ठोत्तमायां हाविष्कृते पर्षइत्याभावः *नुंऽयभिनः कौत्से* अभीनोवाप्रथमायांऐडकौत्से तु विष्णुम्न-मित्याभावः *वृधेऽस्मान्पिबासुतायां पृष्ठजमवर्त्तयोः* पिबासु-तायां पृष्ठाजमदग्नेरभीवर्त्तयोः । आयिर्न्नोबोधिसधमाद्येवृधेइत्या-भावः *पवन्तेऽभिसोमायां मैधातिथे* मैधातिथे अभिसोमाद्या-यांपवन्तेमद्यमित्याभावः *निष्कृतंरुणसाम्नि वृषोअचिक्रायां* मृज्यमानतृतीयायां वरुणसाम्नि निष्कृतमित्याभावः *परी-तायां च परिस्रव *वरुणसाम्न्येवपरातोषिद्वितीयायां नूनंपु-नानोअविभिः परिस्रवेत्याभावः *अधिसोमउष्वावाम्रे* सोम-उष्वान्त्यायां वाम्रे अधिष्युभीत्याभावः *सुष्वाणायां चांधीगवे* आंधीगवे सुष्वाणासोव्येतिअस्य चाभावः चशब्दादध्यधिशा-ब्दश्च । अधिन्वचीतिः *अभिप्रज्ञीयेचोक्तः* अभिप्रितृतीयायां च यज्ञायज्ञीये अधित्रिपृष्ठेत्याभावः *कृपे स्वासु नैपे* स्वासु नै-पातिथे द्वितीयायां यद्वारुमेरुशमेश्यावकेकृपइत्याभावः *वि-

द्रुᳪशीये मधुनिधनेत्त्वाचिसुष्वाणायां यिन्तवेपुरोजित्यां प्रतेशैखण्डिने पातवेनौसᳪहिते शस्तयेतन्त्वामदायाᳪसँहिते गविष्ठयेभिग्रुच्यावने दिवेत्वाष्ट्रीसाम्नोः सहस्रधारायां मादेनौरेवतीष्वतिध्यमायांमहानाम्नीष्वभिश्यैते तदिदासतृतीयायाम् ॥ १२ ॥

इति सप्तमः प्रपाठकः ॥

दइन्द्रसुतायामुद्रुᳪशीये* इन्द्रसुतायामुद्रुवᳪशीये विदेद्वघस्येत्याभावः *मधुनिधनेत्त्वाचिसुष्वाणायां* सोमाः पवंतायां मधुश्चुन्निधने चितानागोरधित्वचीत्याभावः *यिन्तवेपुरोजित्यां* मधुश्चुन्निधन एव पुरोजित्याद्यायां सुतायमादयिन्तवइत्याभावः *प्रतेशैखण्डिने* शैखण्डिनेप्रतआश्विनीतिप्रतेशब्दस्याभावः *पातवेनौसᳪहिते* स्वादिष्ठाद्यायांसᳪहिते इन्द्रायपातवइत्याभावः *शस्तयेतंत्वामदायाᳪसᳪहिते* अत्रिकद्रुद्विषाहीररिसंत्यायाᳪसᳪहितएव तवप्रशस्तयइत्याभावः *गविष्ठयेभिग्रुच्यावने* च्यावने अभिग्रुतृतीयायां गविष्ठयेत्याभावः *दिवत्वाष्ट्रीसाम्नोः सहस्रधारायां* स्वारयोस्त्वाष्ट्रीसाम्नोः सुतासोमांत्यायांसखेंद्रस्यदिवेदिवाइत्याभावः *मादेनौरेवतीषु* रेवतीर्नइत्याद्यायारेवतीषुसधमादइत्याभावः *अतिध्यमायांमहानाम्नीषु* छांदसीषु महानाम्नीषु माध्यमायां सनःस्वर्षदतीत्याभावः *अभिश्यैतेतदिदासतृतीयायां* तदिदासांत्यायां श्यैते अदः सुमधुमधुनीभात्याभावः ॥ १२ ॥

इति पुष्पसूत्रभाष्ये तृतीयस्य द्वादशी कण्डिका समाप्ता ॥

तृतीयः प्रपाठकः समाप्तः ॥ ३ ॥

यकारे च प्रत्यये वृद्धमन्तः पदे तालव्यमाभव-
ति यच्च यकारसंयुक्तं विकृष्टंस्तौषे मित्रमिव प्रा२१
यांसोमा २ विश्वात्वा २३ या एवं जातीयानि न-
रथ्यंमहस्तवानायां कण्वबृहति रहस्ये च बृहति
नर्यः सनोहरीणायामित्यत्र वैत्रे वाम्रे च परीतायाः-
मन्त्योधर्तायामुद्रद्धार्गव ईयतुस्त्वमिंद्रप्रतूर्तिष्वि-
त्यत्राभीवर्त्ते पीयंत्यभ्रातृव्यद्वितीयायामामहीयवे पी-

---

*यकारे च प्रत्यये वृद्धमंतःपदे तालव्यमाभवति यच्च यकारसंयुक्तं विकृष्टंस्तौ ३ षेमित्रामिवप्रा १ यांसोमांविश्वावा एवं जातीयानि* न केवलं हादौ स्तोभे प्रत्यय आ भवति यकारे च प्रत्यये वृद्धमंतः पदे तालव्यमाभवति । यकारसंयोगे च योविकृष्टो यकारस्तस्मिंश्च प्रत्यये आ भवति तदुदाहृतं *न रथ्यं महस्तवानायां कण्वबृहति* उत्सर्गप्राप्तानामपवादोवर्त्तिष्यते त्वामिद्धीतितृतीयायां कण्वबृहति । गामश्वंरथ्यमित्यनाभावः *रहस्ये च बृहति *त्वामिद्ध्यंत्यायामेव रहस्यविषये बृहति गामश्वंरथ्यमित्यनाभावः *नर्यः सनोहरीणायामित्यत्रवैत्रे* गोमन्नद्वितीयायांत्रैतसखेवसख्येनर्यइत्यनाभावः *वाम्रे च परीतायां* परीतोषिप(रीतोष्याद्यायामिति) प्रथमायां वाम्रे दधन्वांय्योनर्य इति अनाभावः *अन्त्योधर्त्तायामुद्रद्धार्गवे* धर्त्ताप्रथमायामुद्रद्धार्गवे हरिःसृजानोअत्योइत्यनाभावः *ईयतुस्त्वमिन्द्रप्रतूर्त्तिष्वित्यत्राभीवर्त्ते* त्वमिंद्रप्रतूर्त्तिमध्यमायामभीवर्त्ते तुरयंतमीयतुरित्यनाभावः *पीयंत्यभ्रातृव्याद्वितीयायामामहीयवे* अभ्रातृव्याद्वितीयामामहीयवेपीयंति ते इत्यना-

यन्तवेमानइन्द्रायां वारे स्फिग्यं माभे मबृहति हीय-यमहेनोरेयावाजीये तृतीयमृतस्य जिह्वायां ना-भवति सर्वत्र ज्ञीये त्वाभवति पदान्तश्चाभवति शा-र्मणि प्रदै ज्ञीये काण्वे रन्ता स्वरे च वियस्ता वृद्धम-प्याभवति प्रियः सूनुर्णवतरे संमील्ये जिह्मनकृत्व्य-

---

भावः *पीयन्तत्रेमानइंद्रायां वारे* रेवां इंद्रांत्यायां वारत्रन्तीये मा-नइंद्रपीयन्तत्र इत्यनाभावः *स्फिग्यंमाभेमबृहति* माभेमद्वितीयायां बृहति सख्यामनुस्फिग्यमित्यनाभावः *हीयमहेनोत्त-रयोर्वाजीये*रायोवाजीये साव्युच्छहीययोव्योंमहीय इति चा-नाभावः *तृतीयमृतस्य जिह्वयां ना भवति सर्वत्र *अ-भिप्रिद्वितीयायां सर्वसामसु नामतृतीयमित्यनाभावः *ज्ञीये त्वा-भवति* यज्ञायज्ञीये तु नामतृतीयशब्दस्याभावः *पदा-न्तश्चाभवति* इदानीं पदान्तीयस्याभावउच्यते । यकारप्रत्य-यस्य यदुत्तरत्र वक्ष्यति *शार्म्मणिप्रदैज्ञीये* प्रदैवोज्ञीये-द्वितीयायामक्षरसंसर्गे णिकारस्याभावः णा २ या ३ *काण्वे रन्ता* काण्वे वयमुत्वाप्रथमायां काण्वानुक्थेभिर्जरन्तइति तेशब्दस्याभावः *स्वरे च वियस्ता* सुमन्त्रानतृतीयायां प-योनिधने स्वरे वियस्तस्तम्भेति पदान्तः स्याभावस्त्वा ३ या स्त-१ स्तं १ भरो २ दसा ३ रू ३३ हो३३ पदान्तस्ययका-रः *अवृद्धमप्याभवति* इदानीमवृद्धस्य पदान्तस्य तालव्यस्याभाव उच्यते । यदुत्तरत्र वक्ष्यते *प्रियः सूनुर्णवतरे* प्रसोमदेवतृतीयायां कण्वरथन्तरे प्रियः सूनु-रितिप्रस्तावे अनाभावः। प्रा २ यः १ अत्रइकारस्याभावः। पदान्तरे तु अनाभावः। पकारेसूनु १ र्ने १ म १ जि १ या ३

इवयाधिया ग्रहणाध्यैनौवारे प्रथमे पवस्वदा सुज्ञाने ङ्गदाशंकुनि विष्टया वाचः साम्नि वयुनावासिष्ठे दिवियज्ञायथोत्तमायां बृहति कृत्व्यास्तौरश्रवसे ॥ १॥

ॐवौकारयोरनन्तरस्वरनीचाद्ययोः प्रत्यययोः

अत्र इकारस्य पदांते यकारः *सम्मील्येजिह्मंनकृत्व्यइवाधिया* संमीलयेपुरोजितितृकेदीर्घजिह्मंन्दुरश्वोनकृत्त्वः सोमंविश्वोज्याधियेति पदांन्तानामाभावः ॥ ह्य २ य १ माना २ तू २ । त्वा ३ या २ धा २ या १ धा २ या १ इकारस्यैपदान्ते यकारे *ग्रहणाध्यैनोवारे प्रथमे* क्षौद्रे वारवन्तीये योनौ वंदध्याइसाभावः । ग्रहणाद्वृद्धस्यापिभवति । पराणि च उदाहरणान्येवंरूपाण्येव निपात्यन्ते *पवस्वदा सुज्ञाने* सुज्ञाने पवस्वदेववीतयाद्यावांआभावः । ग्रहणादपदान्तस्य वृद्धस्याभावः *अङ्गदाशंकुनि* त्वंॐह्यङ्गदाद्यायांशकुनिनिपातनम् *विष्टया वाचः साम्नि* अभिद्युम्नतीयायां वाचः साम्नि जिन्वताविष्ठय इसाभावः *वयुना वासिष्ठे । *वासिष्टेद्वितीयायां आवयुनेष्वित्याभावः *दिवियज्ञायथोत्तमायां बृहति* आसूर्यंॐरोहयोदिवीत्याभावः *कृत्व्यस्तौरश्रवसे* सखायोदीत्यत्रइन्दुरश्वोनकृत्व्यइत्याभावः । ध्येनौवारइत्यारभ्य निपात्यन्तइत्यक्तम् ।

इति पुष्पसूत्रभाष्ये चतुर्थस्य प्रथमकण्डिका समाप्ता ॥

---

ॐवौकारयोरनन्तरस्वरनीचाद्ययोः प्रत्यययोः सर्वं वृद्धमाभवत्यन्तलोपश्च यथा भरनाम्मेंधेध्मवाहनिहवसाग्रेषु नकुच्छैयतविशीयोः* ऊवाच अकारश्च ॐवौकारौ तयोरोवौकारयोः अन-

सर्वं वृद्धमाभवत्यन्तलोपश्च यथाभरनार्मेधैध्मवा-
हनिह्नवसाध्रेषु नकृछयैतविशीययोरथापवादा रागः
स्वःपृष्ठनैयातिथरश्मेषु संगृभातून इत्यत्राकूपारे दू-
रेदृशिराट्सुदैव्ये तकारः परिस्वानायामैध्मवाहे म-
कारः कार्त्तयशमन्तयो रापृच्छयंसेधे रथीनार्मेधे

---

न्तरे स्वरे यदि नीचादिभावः। न ह्मयथापि। तथाप्यानन्तर्य-
मुपपद्यत इति अतोनीचाद्ययोरिति विशेषणम् *सर्वं वृद्धमाभवति
अन्तलोपश्च यथाभरनार्मेधैध्मवाहनिह्नवसाध्रेषु नकृच्छयैतविशीय-
योः* वृद्धमवृद्धं च तालव्यं पदान्तीयमपदान्तीयं च सर्वग्रहणात्।
उदाहरणानि सौभरे वयमुत्वादिषु। नार्मेधेहोन्द्रं अधाहीन्द्रादि-
षु। ऐध्मवाहे परिस्वानादिषु। निह्नवे परित्य्ह्वादिषु। साध्रे
मसुन्वानादिषु। नकृत्। आनोविश्वान्त्यायांऽश्यैतसदोविशीय-
योः। असिसत्यईशानकृदिवि *अथापवादाः* पूर्वलक्षणप्राप्ता-
नामपवादा वर्त्तिष्यन्ते *रागःस्वःपृष्ठनैयातिथरश्मेषु* स्वःपृ-
ष्ठादिषु रङ्ग एव भवति। नाभावः। तत्राहंऽसोमप्रथमायां परि-
धींऽरतीति। तथा नैयातिथे वयमद्यायां, तथा पार्थुरश्मे इन्द्रो-
मदातृतीयायां। अस्माऽइन्द्रवसाविति *संगृभातून इत्यत्राकूपा-
रे* राऽथाकूपारे संगृभायेत्यनाभावः *दूरेदृशिराट्सुदैव्ये*
अग्निनराद्यायां वामदेव्ये दूरेदइत्यनाभावः *तकारः परि-
स्वानायामैध्मवाहे* पवित्रे सोमोअक्षरादितितकारस्यानाभावः
क्षा २ ए २ दो ३२३३ वा ३ अत्र तकारस्यानाभावः। रेफ-
स्यैवभवति। वाग्रसये *मकारः कार्त्तयशमंतयोः* अभीनो-
वाद्यायां कार्त्तयशे रयिमर्षेमयिमकारस्यानाभावः समंते च पुना-
नाद्वितीयायां मधुप्रियं इत्यनाभावोमकारस्य *आपृच्छयंसेधे*

प्रायश्चित्तेषु पार्थुरश्मे स्वास्वाःकारवर्जं मोकारः स-
खायः सोशाक्त्ये मदायतोनवे वायुमारोभासे म-
हांॅश्चरातिवाशो सूर्यमरोनैये सुषावसोछंदसद्वैग-
तयोः स्तोभो गोद्वैगते सोमसुज्ञाने भुवनोटते

---

उत्सेधे पुनानः सोतृतीयायां आपृच्छयंधरुणमित्यनाभावः *र-
थीनामेधेप्रायश्चित्तेषु* इन्द्रंविश्वाद्यायां प्रायश्चित्तेषु नाम्मेधे रथी-
नामितिमकारस्यानाभावः *पार्थुरश्मेस्वास्वाःकारवर्जम्* स्वा-
सु पार्थुरश्मे आभावप्रतिषेधः । आःकारवर्जमियाइन्द्रस्येति-
मिया इत्यस्य आःकारस्यआभवति ॥ वाप्रत्यये । अन्यत्र
व्यंजनस्य ऊष्मणोपिच अनाभावः । उपांतीयस्याक्षरस्यैव आ-
भावो भवति नचानान्त्रोक्राचानुति *ओकारः* वक्ष्यमाणेषूदा-
हरणेषु ओकारस्याभावप्रतिषेधः *सखायः सोशाक्त्ये* शाक्त्ये
गौरीविते सखायः सो इत्यनाभावः ओकारस्य *मदायतोनेव*
सोमउष्वान्त्यायां मानवेमंदीमदायतो इति ओकारस्यानाभावः ।
अत्र ओकारस्यअकारप्रत्यये अनाभावः *वायुमारोभासे*
पवस्वदेवाद्यायां भासे वायुमारोहइत्यनाभावः *महांश्चरातिवाशे*
कईवेदमध्यमायां वाशेमहांॅश्चरसीति प्रतिषेधः *सूर्यमरोनैये*
नैयातिथे इन्द्रमिद्देवतातृतीयायां इद्रः सूर्यमरोइत्यनाभावः *सुषा-
वसोछन्दसद्वैगतयोः* माधुछन्दसद्वैगतयोः परीतोषिप्रथमायां अ-
नाभावः । *तोभोगोद्वैगते* द्वैगते परीतोषितृतीयायां श्रीणं-
तोगोइत्यनाभावः तो २३ गे ३२३३ रु २ हो २ वा २ प २२
ऋकारस्यौकारः *सोमसुज्ञाने* पवस्वाद्यायां मधुमान्तसोम इ-
त्यनाभावः । माधुमा २२ सो २३३२ रुहो २ वा २ ऋकारेपो-
कारे *भुवनोटते* ऐटतेअस्यप्रत्नातृतीयायां पुनानोभुवनेइत्यना-

यिनोंबोत्सेधे उवर्णतुनसर्वत्राभवति ग्रहणादाभवत्यु-
भयं स्वासुमेधातिथे नः सुवारेप्रथमे प्रियः सूनुर्द्वै-
गतगौंगवयो रिंदुर्गौतमसाध्रयो रकूसिष्ठप्रियेयदिंद्र-
चित्रायाꣳ शिशुꣳसर्वत्र ॥ २ ॥

ऋगंतीयः स्पर्शः प्रथमः स्वरो नामि विसर्जनी-

---

भावः । *यिनोंबोत्सेधे* उत्सेधेपिबासुग्रायांआयिनोंवोइत्य-
नाभावः। आ २ पा २२३१ नोंबो २। ऋ २ हो २ वा ३
हो ३ दकारस्यअकारः *उवर्णं तु न सर्वत्राभवति* इदानीं
ऊकारस्याभावप्रतिषेधोवर्त्तिष्यते। यथानाम्नेमेधेअध्मह्याद्यायात्रग्मा-
ता २ क्र ३ इत्येवमादीनिं *ग्रहणादाभवति* ओवर्णं तु न सर्व-
त्राभवतीत्यस्यापवादोवर्त्तिष्यते वक्ष्यमाणेषूदाहरणेषु *उभयꣳ-
स्वासुमेधातिथे* मेधातिथे स्वास्त्वंत्यायां उभयंकरामित्याभावः वि १
द्व २ ष १ णꣳसंत्वः नमा २ ऋ २ हो ३ अत्र ऊँकारस्य अ-
पदांतीयस्यकृत्तोभेप्रत्ययेआभावः *नः सुवारे प्रथमे* वारवन्तीये
मन्त्रानः सूइत्याभावः *प्रियःसूनुर्द्वैगतगौंगवयोः* प्रसोमदेद्वि-
तीयायां प्रियः सूनुरित्याभावः *इंदुर्गौतमसाध्रयोः* इंदुरश्वइ-
तिगौतमसाध्रयोरनाभावः *अकूसिष्ठप्रिये यदिन्द्रचित्रायाम्* य-
दिन्द्रचित्रायां वासिष्ठप्रियेअकूपारस्यदावनाइत्यनाभावः। आ ३
का ३ नु ३३२२ वा २। अत्रसकारस्यअपदांतीयस्यत्वाप्रत्य-
ये *शिशुꣳसर्वत्र* तिस्रोवाचद्वितीयायां सैंधुक्षितादिषु मर्ज-
यंतीर्दिवः शिशुमितिसर्वत्राभवति।

इति पुष्पसूत्रभाष्ये अष्टमस्य द्वितीया कण्डिका ॥

---

*ऋगंतीयः स्पर्शः प्रथमः स्वरोनामि विसर्ज्जनीयश्च ना
भवति, तत्रत्योहोशब्दः प्रथमाव कृष्यते सदा ३ दौ २३ हिया

यद्व नाभवति तत्रत्वौहोशब्दः प्रथमात्कृष्यते स-
दादौ २३ ह्वियामौ २३ स्तियोरौ २३ एवंजातीयानि
दैव्ये त्वनृगंतीयः स्पर्शः प्रथमः स्वरोनामि विस-
र्जनीयश्च नाभवति तत्र त्वौहोशब्दः प्रथमात्कृष्यत
आविताजराधिहृतॄणामौ २३ आ २३ हूंमहिश्रवस्यवा
प्रायुभाथिरौ २३ तुरीयं त्वा भवति शिशुं दैव्ये सच-
मानः समुद्रंतुरीया ३ औहोहाइ रहस्ये त्वृगंतीयश्चा-
नृगंतीयश्च स्पर्शः प्रथमः स्वरोनामि विसर्जनीयश्च
नाभवत्यृगन्ते त्वेव प्रथमकृष्टस्तोभ इलांदद्वितीया-

---

मौ २३ स्तियो २३ रो २२२ एवं जातीयानि* औंवौकारयो-
रित्यनेन प्राप्तस्यापवादः ऋगंतेभवऋगंतीयः स्पर्शः । प्रथमः
स्वरो यः नामि परश्च विसर्ज्जनीयः सर्वत्र ना भवति । तत्रत्वौ-
होशब्दः प्रथमस्वरादारभ्य कृष्यते । उभयत्रापि तदुदाहृतं रौ-
रवांधीयवद्विर्हिंकारेषु *दैव्ये त्वनृगंतीयः स्पर्शः प्रथमस्वरो नामि-
विसर्ज्जनीयश्च ना भवति तत्र त्वौहोशब्दः प्रथमात् कृष्यतआ ३
विता २ जरा ३ इतॄ णामौ २ आ २३ हूमहिश्रमस्यवा प्रायुभा
इरौ २२२* तदुदाहृतं स्वासु वामदेव्ये एदुमध्येरिति च वा-
मदेव्ये *तुरीयंत्त्वा भवति शिशुंदैव्येसचमा नः समुद्रंतुरी २ या
३ ऋ २२ हो २ हा ३इ* दैव्ये त्वनृगंतीय इति प्राप्तस्याप-
वादः । तदुदाहृतम् *रहस्येत्वृगंतीयश्चानृगंतीयश्च स्पर्शः प्रथमः
स्वरोनामि विसर्ज्जनीयश्च नाभवति* रहस्ये तु ऋगन्तीयश्चानृगन्ती-
यश्च स्पर्शः सर्वत्र एव ना भवति । नामि परश्च विसर्जनीयो ना
भवति । आसोम अभिसोमयद्यावायदिन्द्रयादिषु तृचेषु अन्तरिक्षे
*ऋगन्तेत्वेव प्रथमकृष्टस्तोभइलांदद्वितीयायां* ऋगन्त इलां-

यां तृतीयादिन्यामौहोवायां चतुर्थस्थोवृद्धः पदांतः सर्वत्राभवति यथास्यशिशुमक्रान्वासिष्ठेषु श्यैत-वारयोश्च तत्रापवादा रागोग्नेबृहति मत्स्यबृहति-त्सरः प्रत्युबृहत्ययोऽग्नेबृहतिजुष्टो यज्ञाष्टाहृत्पूर्जो ऽयंपूषाबृहतिगावः श्येनोत्यः सिष्ठे वृषोचायास्येवृषो

---

द्द्वितीयायां प्रथमस्वरादारभ्य कुष्टे स्वरे प्रत्यये ना भवति । पूर्णाक्षिदर्शितं ऋतुमिति *तृतीयादिन्यामौहोवायां चतुर्थस्थोवृद्धः पदान्तः सर्वत्राभवति यथास्यशिशुमक्रान्वासिष्ठेषु श्यैतवारयोश्च* तृतीयस्वरादिभ्यां औहोवायां प्रत्ययभूतायां चतुर्थस्वरस्थो-वृद्धः पदान्तः सर्वत्राभवति । रहस्येचान्यत्र च । यथा अस्यप्रे-षाशिशुअग्नानं अक्रान्समुद्रतृचेषु वासिष्ठे अभिप्रवादिषु श्यैते स्वासु च वारवन्तीयादिषु *तत्रापवादाः* तत्र तस्यां तृतीया-दिन्यां औहोवायामपवादा वर्त्तिष्यन्ते *रागोग्नेबृहति* अग्नेवि-वस्वाद्यायां बृहति अद्यादेवा इति रङ्ग एवेतिनाभावः । अत्र स्वाभाविकदीर्घात रङ्गएव भवति नाभावः । यथादधन्वाङ् इति दर्शनात *मत्स्यबृहतित्सरः* मत्स्यबृहतिपात्रस्यैव हरिवोमत्सर इति सन्ध्यगीत एव नाभावःयथार्वेकेतथेव *प्रत्युबृहत्ययः* । प्रत्युबृहति अपोमहीत्यनाभावः *अग्ने बृहति जुष्टः* । अग्नेविव-स्वायां बृहतिजुष्ट इत्यनाभावः । *यज्ञाबृहत्यूर्जः* यज्ञाबृहति ऊर्जोनपातमित्यनाभावः पूर्वे सन्ध्यगीते *अयंपूषा बृहतिगावः* अयंपूषाद्वितीयायां गावोमदाइत्यनाभावः । अत्र संध्यगीतं न विद्यते गा २ वो ३३३ *श्येनोऽत्यः सिष्ठे* तृतीयादिन्या-मेव असाविसोमतृचेश्येनोनयोनिमन्त्योनपृष्ठ इत्यनाभावः । अत्र संध्यगीतं न विद्यते अनः । *वृषोचायास्ये वृषो२२२

३४ औहोवा इन्दोच स्वः पृष्ठइंदो ३४ औहो उ-
वर्ण तु न सर्वत्राभवति ग्रहणदाभवतींदुस्त्रिकबृहति
शिशुंॅसर्वत्र ॥ ३ ॥

उंकारोन्तः पदिकोग्रहणादाभवति नमो घोण्यं-
चाग्नायिंनमा २३४ औहोवातो मा २३४ औहोवा
तालव्यं च द्वितीयात्कृष्टं तालव्यंॅहायिशब्दश्चाभ-
वत्योस्तोभेप्रथमादौप्रत्ययेश्रिया ३ उ २३४ वाहा
औहोवा* त्रिणिधनायास्ये मृज्यमानांद्वितीयायां प्रगीतमुदाहृतम्
*इन्दो च स्वः पृष्ठइंदो २३३ औहो* तवाहंॅसोमाद्यायां
स्वःपृष्ठः प्रगीतं एत्र उदाहृतं *उवर्णतु न सर्वत्राभवतिग्रहणा-
दाभवति* । तृतीयादिन्यामेव न सर्वत्र उवर्णमाभवति । ग्रह-
णादाभवति वक्ष्यमाणेषु *इंदुस्त्रिकबृहति* त्रिकबृहति सत्य इन्दु-
रिति आभावः । *शिशुंॅसर्वत्र* शिशुंजज्ञानमिति तृतीया-
दिन्यां सर्वत्राभवति वासिष्ठादिषु ।

इति पुष्पसूत्रभाष्ये अष्टमस्य तृतीया कण्डिका ॥

*ओंकारोऽन्तः पदिकोग्रहणादाभवति नमोघोण्यंचाग्ना ३
यि नमा ३४२ आहो २ वा २ तोमघा ३४ औहो २ वा ३
लव्यचं *तृतीयादिन्यामेवाधिकारात् ओंकारोन्तः पदिको-
ग्रहणादाभवति । वन्दध्याअग्निनमोभिः । स्थात्वावतोमघोन इति
च वारवंतीये तालव्यं च तृतीयादिन्यामेव । यथा तन्तेमदाद्यां-
स्ययोः हरिश्रियमिति । वृषपर्वारथोजयादिवोदिवे तथा श्रुधी-
हवांत्ययोश्चि किंञ्चिन्मनसंधिषुरुण्यस्यपुस्येति न *द्वितीयात् कृष्टं
तालव्यंॅहाइशब्दश्चाभवत्योस्तोभे प्रथमादौ प्रत्यये श्रिया ३३
उ ३२२ श्रा ३ हा ३ ऊ २२ हा २२ ऊहा ३२ हा

२ उँ ३ हा ३ उँ ३ हा ३ हायिस्वासुनकारः आय-
तीयेदानाया २ वोहुदया ३ उँ २३४ वाशुकारम-
कारौचवृष्णि त्सिबास्वरॐसर्वमाभवतियास्तोभेप्र-
त्ययेवचश्वनादभ्भिन्नित्येवंजातीयानि मायिते वचा २
या २३४ औहोवा वानादभा ३ या २३४ औहोवा
औणायवयोस्त्वोभवतिकविक्रतौ २ या २३४ औहो

---

द्वितीयात् स्वरात् कृष्टं तालव्यं हाइशब्दश्याभवत्योस्तोभे प्रथमादौ
प्रत्यये तदुदाहृतं। मखाय आदेत्रोदासे। ग्रौताने च। अत्र च
ग्रौतानेउपोषुअभेदपागिरिदितिपादवर्गसंज्ञामितिद्विकौधिकृतः ऋचि
नित्यं सोमेतिमोषु उपोषु जाहोहा ३ हा उहो ३२ भेनुवेच·
ऊवहऊभे दधात् अक्षरामन इति वचनात्। अक्षरात् प्रकृतोत्
उभेभवत इति यदुक्तंभवतीति *स्वासुनकारः आयेतीयदानायं-
३ ३ वो ३ हुं ३ दया २२ ऊ ३३२२ वा*स्वासुआय-
न्तीये स्तोभप्रत्ययस्य नकारस्य लोपः। मनोदानायचोदय-
न्निति *शुकारमकारौ च वृष्णि* तस्मिन्वृष्णिशुकारमकारौ-
ऊस्तोभप्रत्ययौआभवतः। हन्तिवृत्राणिदाशुमकारं अभिप्रवः
सुराधममिति। *त्सिबात्स्वरॐसर्वमाभवति यास्तोभे प्रत्यये
वचश्वनादभ्भिन्नित्येवंजातीयानि मा २२ यितेवचा २२ या २२
२२ औ २ हो २ वावा २ ना २ दभा २२ या २३२२ औ २
हो २ वा*त्सिबास्वरॐसर्वमाभवति यास्तोभे प्रत्यये तदुदाहृतं
त्वमङ्गप्रशंॐसायां त्रैककुभे *औणायवयोस्त्वोभवतिकविक्रतो २२
या २३३३३ अ २ हौ वा ऋतावृधो २२ या २२२२ औहो
२ वा ३ पनिष्ठयो २ या २३३३ औहोवा* औणयिवयोस्तु-
त्सिबात्स्वरःया स्तोभे प्रत्यये आभावमाप्नोभवति। तदुदाहृतम्।

वाज्ञतावृधो २ या १३४ औहोवायनिष्टयो २ या २३४ औहोवा चरेवारेहत्यां ॐ सर्वंॐश्रुधीहवायां स्तोतृभ्यश्चौ कारोंतः पदिको ग्रहणादाभवत्येकारे-हकारयोः प्रत्ययोः कावयामवाम्रसोमसामसुनाम-नृताऽ२ इयमधिराए ५ दुरितासा २३ प ३ सुषा-हो २ इव साहो २ श्येनो नया २३ हा अध्रिगवि-त्यत्राचत्वमौकारेप्रत्ययेरयिष्ठेऽवृद्धॐसर्वमाभवत्यौहो-

---

*चरे वारेहत्यां* वारवन्तीये बृहत्यां चरेसंघातविषये ओभवति च रस्त्रैशोके । चराजासो २२२ हा ३ ई उदाहरणानि यज्ञाप्रथ-मायां इराचदक्षसोहापि । तथापनामथमायां ऊर्जोनपातमाहूवोहा-पि *सर्वंॐश्रुधीहवायांॐस्तोतृभ्यश्च* श्रुधीहवायां चाबृह-त्यामपि चरसंघातविषयस्योभावः इन्द्रयस्त्वासपर्यतो ३ इन्द्रा २२ हातृस्तोतृभ्यश्च स्तोय ३ भ्यो ३२ ३३ हा ३ पि *ओ कारोन्तः पदिकोग्रहणादाभवत्योकारहकारयोः प्रत्यययोः का-वयामवाम्रसोमसामसुनाम ३ तृता ३३ इयमधिराये २३ दुरि-ता ३ सा २२ प ३२ णसुषा २ हो पि २३ वत्सा ३ हो ३२ श्येनोया ३ हो* पूर्वलक्षणमेवाधिक्रियते । आभावप्रासङ्गिका-नां पावद्वचनत्वात् ओकारः सन् अन्तः पदिकग्रहणादाभवत्येका-रहकारयोः प्रत्यययोः तदुदाहृतं ऐडेकावे ऐडेयामे च आमिमि-याणि असाविसोमयोः । वाम्रे परीतोष्यां अध्यर्द्धेड च सोम-साम्नि असाव्य श्शुम्र्मदायां *अध्रिगवित्यत्रात्वमौकारे प्र-त्यये रयिष्ठे* इयामसुम्ने ते अध्रिगो इत्यत्र अकारेप्रत्यये आ-भावोरयिष्ठे *अवृद्धॐसर्वमाभवत्योहोस्ताभेसस्वरेप्रत्यये रेवतीर्ना-औ २ होप्राणाशिक्षाऔहो २ सा औहो २* अवृद्धॐसर्वमाभव-

स्तोभानामुद्धारो गणस्तोभेसस्वरेप्रत्ययंरेवतीर्न्ना औहो
प्राणरा॥शशाऔहोसाऔहो नेंद्रस्तेसोनहितेपूविश्वस्य
दूज्योतिष्कृणोवोदेथाॐस्तूरागश्वपुशब्दश्वेलांदे रथन्तरे
सर्वमाभवति स्पर्शगभस्त्योर्वर्जमोस्तोभेप्रत्यये ऽश्वि-
नोर्व्रतपूर्वे च तालव्यंॐ शाकरर्षभेत्वो ष्ट्यस्पर्शवर्ज-
मेस्तोभेप्रत्यये द्दाष्णिसर्वमाभवत्योवायामानंतरस्व-

---

ति औहोस्तोभे सस्वरे प्रत्यये* तदुदाहृतं वारवन्तीयादि
षु *नेन्द्रस्तेसोनहितेपूविश्वस्य दूज्योतिष्कृणोवोदेथाॐस्तूराग-
श्वपूशब्दश्वेलान्दे *अनन्तरविधिरपवादः परिप्रघन्वायां इन्द्र-
स्तेसोमेत्यनाभावः एह्युष्वायां नहितेषुएनावायां विश्वस्य प्र-
त्युअदर्यायां ज्योतिष्कृणोति । इमाउवान्त्यायां वोदेथाॐस्तू-
इति । अग्नेविवस्वद्द्वितीयायां अद्यादेवाॐइतिरङ्गः पुशब्दश्वेलांदे
सदर्श तस्य वपुष इत्यनाभावः *रथन्तरे सर्वमाभवति स्पर्शगभ-
स्त्योर्वर्जमास्तोभेप्रत्यये* विधिमध्येअपवादः। स्पर्शगभस्त्योर्वर्ज-
सर्वे स्पर्शानदीष्वागभस्त्योरितिविसर्जनीयस्य नाभावः । उदाहर-
णानि एनाद्यायां विश्वस्यदूतममृतन्देवॐराधोजनानां । उद्यन्न-
क्षत्रमर्चिवत् रथन्तरे *अश्विनोर्व्रतपूर्वे च तालव्यं* अश्वि-
नोर्व्रतपूर्वे युनानायां तालव्यमाभवति । ॐस्तोभे प्रत्यये अपो-
घसानोअर्षतिहाकुपवपादि तालव्यमाभवति*शाकरर्षभे त्वो-
ष्ट्यस्पर्शवर्जमेस्तोभेप्रत्यये* पवस्ववाजसातायां ओष्ठ्यस्पर्शवर्जमे
स्तोभे प्रत्यये आभवति इन्द्रापयसोयओष्ट्यत्वादनाभावः । तुवा-
मेरिहाए इति स्पर्शत्वादनाभावः *द्दाष्णिसर्वमाभवत्योवायामन-
न्तरस्वरनीचाद्यायां प्रत्ययेप्रत्यये* द्दाष्णिसर्वमाभवातिपदांतीयमतः

रनीचाद्यायां प्रत्ययेप्रत्यये ॥ ४ ॥

ऊहगानेयोनिवत्स्वराः स्तोभाभ्यासविरामा अ-

---

पंदिकं च । ओवायामनंतरस्वरनीचाद्यायांप्रत्ययभूतायामिति ।

इति अष्टमस्य चतुर्थी कण्डिका ॥

---

उपाध्यायाजातशत्रुकृतौ भावाभावः समाप्तः ।

*ऊहगाने योनिवत्स्वराः स्तोभाभ्यासविरामाः* कोऽस्या-भिसम्बन्धः । उच्यते । तालव्यमायि इत्येतस्मिन्सूत्रे उक्तमेतत् । ऊहगाने योनिवत्स्वराइत्येतत्पूर्वं वक्तव्यं प्रकृतिमापद्य विका-रवचनंयुक्तमिति तत्र च प्रतिहार उक्तः यथा अग्निष्टोमप्रकरणे प्रथमं गायत्रं साम भवति तत्रास्यानधिकार उक्तः । ऊहशास्त्रानु-सारित्वात् । ततोऽनन्तरमामहीयवं भवति । तत्र च तालव्यस्य वि-कारोदृष्टः । उच्चातायि इति उक्तं तेन प्रसङ्गेन तालव्यमाइत्युक्तं । तेन प्रसङ्गेन सर्व एव भावा अनुपरिक्रान्ताः आभावान्ताः । इदानीं विकारा वक्तव्याः इयत आह । ऊहगाने योनिवत्स्वराभवन्ति-इति प्रकृत्यापदेन कृतं ऊहगीतौ योनिवत्स्वराः क्रुष्टादयः । स्तोभाश्च तद्देशा भवन्ति अभ्यासाश्च तादृशा एव भवन्ति । विरामश्च पर्वाणि प्रकृतिवद्भवन्ति । योन्यापादनं विकारार्थमि-त्युक्तम् । स्वरस्तोभाभ्यासविरामा इति वक्तव्ये विसमासः प्र-कृतिपर्वनियमार्थं, अन्यसंघातोद्देशेपि प्रकृतिवद्विरामः स्यादिति । यथाकर्तृगेतन्त्वादेशः *अनभ्यासस्तुतच्छन्दसम* योनिवदभ्यासे प्राप्ते अपवादः । योनौ यान्यभ्यासेनान्यच्छंदः संपद्यन्ते गौरीवितादीनि तानि पदान्तच्छन्दः अनभ्यासेनापन्नं तस्मिन्पदा-च्छन्दसि चोद्यते । अनभ्यासेनापन्नं तदाऽनाभ्यासः । गौरीविती-

भ्यासस्तुतछंदसं विकाराहि प्रत्यक्षपरोक्षादय स्तेषामु

---

दलकौत्सत्रैककुभवैखानसादिषु । वैतहव्यौर्ध्वसद्मनाष्टादंष्ट्राणामयोनौ नाभ्यासः वैतहव्ये उत्तरयोः । और्द्धसद्मने सर्वएव । अयोनौ आष्टादंष्ट्रे आत्वाविशंतिवति । एतेषु पूर्वनियमादभ्यासः । प्रकृतिपूर्वनियमार्थं अप्रकृतादेरपि प्रकृतिः । आनुष्टभीरात्रिरिति वषडन्ते इन्द्राणायां स्वासुवत् । अक्षरपरिमाणनियमार्थे षट्सप्तानि चत्वारि सहस्राणि च पञ्च ज्योतिष्टोमे अग्निष्टोमांते संपद्व तस्मादभ्यास एव योनावेवश्यैतनौधसापेक्षया *विकारा हि प्रत्यक्षपरोक्षादयः* । ते च आयिभावादयः । योनिव्यपेतंयज्ज्ञानं सविकारः प्रत्यक्षप्रकृतिः *तेषामुक्तोनियमः* तेषामायिभावादीनां विकाराणामुक्तंलक्षणं । नियम उच्यते । योनिवद्भावउक्तः । अनंतरं चापवादः कृतः । अनभ्यासस्तुतच्छन्दसामिति तेन प्रसङ्गेन इदमुच्यते । क्वचित्प्रकृतिवद्भावः । क्वचिदायिभावः । क्वचिदाभावः । क्वचिल्लोपः । एवंलक्षणोऽनियमः । क्वचिदन्यदेव यथाऽहोमया इति । दैवोदासे इति । क्वचिदवृद्धस्यंप्यायिभावः । यथाईशाणवन्तर इति । ते च किंरूपा विकारा येप्रक्रान्ता इति । उच्यते ।

आमित्वं प्रकृतिं चैव वृद्धं चावृद्धमेव च ।
गतागतं च स्तोभानां मुच्चनीचं तथैव च ॥
सन्धिवत्पदवद्भानमत्त्वमाभात्विमेव च ।
संकृष्टं च विकृष्टं च व्यंजनं लुप्तमाहृतम् ॥
आभावाꣳश्च विकाराꣳश्च भावाअष्टादश स्मृताः ॥

तेषां भावानां सप्तदश साधिताः । अतः परं विकारान् साधयिष्यामः *अतो अन्ये नियमाश्रयाः पर्वांश्चपाश्च* अतः

क्तोनियमोतोऽन्येनियमाश्रयाः पर्वाश्रयाश्च तेषानि.

---

एभ्योविकारेभ्यः येऽन्ये विकारास्ते द्विविधा भवन्ति नियमा-श्रयाः। पर्वाश्रयाश्च वक्ष्यमाणाः। तदेतत्प्रतिज्ञासूत्रं अधिकारार्थमित्यर्थः। तेषां नियमाश्रयाः पूर्वं वर्तिष्यंते *तेषां नियमाश्र-याणां* पूर्वं लक्षणं वक्ष्याम इत्यर्थः। नियमोनामपूर्वलक्षणो-भेदः। एकरूपमित्यर्थः। आर्चिकादीनां भेददर्शनादुक्तं *यथै-तच्चतुर्थमंद्रातिस्वार्याणांस्वराणां ध्यंतरमुच्चमुच्चमुदूहः *य-थैतच्चतुर्थमंद्रातिस्वार्याणां स्वराणां चतुर्थस्य प्रथमोध्यंतरः। मंद्रस्यद्वितीयः अतिस्वार्यस्य तृतीय इति। तदेतत्सांहितीषूपनि-पातस्वरानुदूहंतिसुसिद्धत्वात्। चतुर्थादात्तमस्वराध्यंतरानुदूहं-तिप्रागुपक्रांतसमानपुरुषवचने तृतीयप्रभृतीनामुदात्ततमः क-श्चित्स्वरो भवति तमुदूह इत्याचक्षते। तथा च यज्ञे क्रियत इति। वाराहवात्सप्रमरायादिषुनमुदूहारंभः कस्मादिति कथं च एनारंभ इति। उच्यते विभाग्यत्वात् एतेषां सस्तोभाः पादाः प्रतिकर्तृ भवंति। ते च पादा गीतिः कर्त्तव्या भवति। ते च समानपुरु-षवचने तृतीयप्रभृतीनां अन्यतमः स्वरो भवति। तस्मादुदूहा-भावः। सत्य मुच्यते। अत्र आरण्यगेयसामान्याद्रथंतरस्तोभाव्ययो-ग्यताभावात् उदूहप्रवृत्तिः। वराहे च वाशब्दस्य कर्षणप्रवृत्तिरेव। धर्म्मविधर्म्मणोराद्यस्तोभस्याभ्युदूहप्रवृत्तिरेव अन्यथा पञ्चाक्षरशस्तो-भविभाग्ये धर्म्मविधर्म्मणी इत्येतस्मिन्पक्षे आद्यस्य स्तोभस्याभ्युदूहोन प्राप्नोति। अतः अभ्युदूहारंभोवाराहादिषु। दीर्घकर्षणस्य वृद्धिः योनिवद्भावे प्राप्ते प्रतिषेधः। ऊहगीतौ तालव्यादेर्म्मइत्याद्येक-स्यचित्रभ्ंराधो ज्येष्ठमप्रर्पशंमध्यममिमाति। तदूहे तु श्रायंतीये यज्ञायज्ञीयवैयातिथसौमित्रादिषु। दीर्घकर्षणेष्वान्तकर्षणानीति च

यस्माश्रयाणां यथैतच्चतुर्थमंद्रातिस्वार्यणां स्वराणा-
मन्तरमुच्चमुच्चमुद्धहो दीर्घकर्षणस्यवृद्धिर्नंदायात्सि-
व्यकृर्षणं गतेरेकारभावप्राप्तायाएकारनिवृत्तिः गी-
तीनामंते निधनमेवमादयोनियमाश्रया अथ पर्वा-

---

श्रुतेः । *नंदायाऽ तिसवाकर्षणं* नंदायाऽ तिसवास्वरे प्रत्यये
कर्षणप्रतिषेधः । घृतनिधनसांवर्त्तादिषु । ग्रामे गेयं चलांगलानामेवैकं
इति वचनात् । वैनहव्यश्येत्तोत्तरजनित्रादिषु । नंदासादृश्यात्प्र-
तिषेधः वृद्धत्वाच्च गत्यंतं तालव्यमायि । तद्वृद्धमितिवचनात् ।
*गतेरेकारभावं प्राप्ताया एकारनिवृत्तिः* गतेः एकारभावप्रा-
प्ताया एकारस्य निवृत्तिः । निधनसौहविषगौषूक्तवैश्वमनसा-
दिषु । नंदात्तिसवाभावोत्कर्षणभवत्येवं । एकारनिवृत्तिस्तु भवति
*स्तोभानामुद्धारः* । सामांसवर्जग्रामेगेयेषु आरण्यशेयेषु वक्ष्य-
त्युपरिष्टात् तत्राद्युक्तं शषउद्धारः । नुतोपर्वीतएभवतीस्थंकुष्टमित्य-
धिकार । इत्याभावे गत्यंतं तालव्यमा इति नतपतंपमांपद्यते गत्यं-
तमिति एकारापत्तिस्तस्य पकारस्य निवृत्तिः । तेरश्वयज्ञायज्ञीय ।
अरण्येगोपषु । वक्ष्यभ्युपरिष्टात् । तत्राभ्युक्तंशेषनुमुद्रारः* ग-
णगीतिनामन्तेनिधनं*गणस्तोभे न येषां गानं यथावारवंतीयवाम-
देव्यश्रुध्यानां प्रसिद्धस्वराणमित्येवमादिषु तृचेषु वारवंतीयस्य व-
यज्ञायज्ञायादिषु तच्च विशेषयिष्यति अतिस्तोत्रीयमार्चिकानि-
निधनानीति*एवमादयोनियमाश्रयाः* । शास्त्रांतरसिद्धा अपि
प्रत्येतव्याः । यथा बृहति रोहमत्यवरोहौ । यज्ञायज्ञीयबृहद्रन्थतराणां
ककुबुत्तरयोः व्यक्षरप्रस्तावानां तृचेषु व्यक्षरसंसर्गः । प्रथमच्छं-
दः क्रियाविवेकः । उच्चाक्षरोपधिमित्येषजातिः*अथपर्वाश्रयाः*
*अधस्तात्प्रतिज्ञातं नियमाश्रयाःपर्वाश्रयाश्चेति । तत्र नियमाश्रया

अथा॰ कृतस्वराणि परिमिताक्षराणि छन्दांसि तेषामूहे ज्यायसि छन्दसि यथान्यायमावापः कनीयस्यादितो लोपः पर्वणांसंघातानां च थुर्मदायास्तु त्र्यक्षराया उपाद्यलोपो वारे लेयप्रस्ता-

---

व्याख्याताः। अथेदानीं पर्वाण्यथान् व्याख्यास्यामः । *कृतस्वराणि वर्णाणि परिमिताक्षराणि छन्दांसि। *कृतस्वराणि नियतस्वराणि इत्यर्थः प्रसिद्धस्वराणीत्येव परिमिताक्षराणि पर्वाणि छंदइत्युपपत्तिगानं लक्ष्यते वेद इत्यर्थः *तेषामूहे ज्यायसि छंदसि यथान्यायमावापः* तेषां पर्वणां ऊहे योन्यधिकेछंदसि-यथान्यायमावापः न्यायः सूत्र उक्तः। प्रस्तावप्रतिहारोपद्रवनिधनानामक्षरपरिमाणं सर्वत्र यथायोनिविकर्षेदिति। परिशेषादुद्गीथ आवापो भवति। श्रिशुंवामदेव्यवत् । मा २ जंतिशुंभंतिविपंमरुतोगणेन कविर्गीर्भिः का २ व्ये २ ना २ कविः संसो ३ मः पा २ ऋ ३ ३ हो २ हा ३ द्रः। अथत्रा लक्षणन्याया इ चिपादगीतिरभ्यस्यत इत्यधिकृत्य *कनीयस्यादितलोपः पर्वणांसंघातानां *योनौ छन्दसऊनेछन्दसि पर्वणामाद्यानामक्षराणां चालोपः कर्तव्यः सर्वातानां आद्यानां पर्वणां लोपः कर्त्तव्यः। यज्ञायज्ञीये आद्ये द्वे पर्वणी ज्ञावसंघातः। क्षावश्वयत्प्रतिकृतं तृतीयोच्चासंहन्यत इति परे च पर्वणि द्वितीयपूर्वादधिपातंत्राणामिति आदौ संहतपर्वणां लोपः उत्तरयोदधिषधारादेवावतिष्ठते आद्या पर्वं च। आद्यानामक्षराणां लोपो भवति। यथा रथन्तरे प्रस्तावे न तावत्प्रस्तावः। तत्र उत्तरयोर्द्वे अक्षरेण प्रस्तोतीतिवचनात् *थुर्मदायास्तुत्र्यक्षराया उपाद्यलोपोवारे *आदिलोपत्रायउपाद्यलोपः आद्यानामक्षराणां लोपः। ईधसोवायतदंत्र्यक्षरमवशिष्यते। पथब्रह्मा-

यसदृशोष्वविकारो गायन्त्याद्यायामाष्कारणिधनवदि-
न्द्रायाह्युत्तरयोर्वयमुत्वावत् काक्षीवतउच्चावद्देव्य आ-
काराकारयकाराभ्यासएनातं वोग्निमिति निधने च

---

कालये सुमम्नावारवंतीयादिषु च। आद्यानामक्षराणां लोपः एषा
३ व्रा ३ ह्मा इति प्राप्ते आद्यमक्षरस्य पर्वलोपः। तथा वारवंतीये
अ १ श्वं १ न १ इत्येषां पर्वलोपः। नन्वा २ ऋ २ हो ३ हा
३३ इतिपर्वउच्चारः सुमम्नावारवन्तीये आद्याक्षरलोपः *शुमंदा-
यास्तु ऽयक्षरायानुपाद्यलोपोवारे *आदिलोपः प्राप्तउपाद्यलोपः।
आदिकनीयस्यस्य सतिगीतलोपः। पनापज्ञांतयोर्वारवंतीये दे-
वउंराऽपेनुतन्नातेतिचवत्। असाऽयउंशुतृतीयेश्रुमंदा *लेय-
प्रस्तावसदृशोष्वविकारः*। कालेयप्रस्तावसदृशेषु सामसु अवि-
कारः। सिद्धोपन्यासोविशेषविवक्षया *गायंत्याद्यायामाष्कार-
णिधनवत्* गायंत्याद्यायां कालेये आष्काराणिधनवत् प्रस्ता-
वस्वरो भवति। चतुर्थस्वर आष्काराणिधनवदित्यर्थः *इन्द्राया-
ह्युत्तरयोर्वयमुत्वावत्* इद्रायाह्युत्तरयोः कालेयेवयमुत्वावत्प्रस्ताव-
स्वरोभवति। काण्ववदित्यर्थः *काक्षीवत्उच्चावत्* काक्षी-
वते उच्चावत् प्रस्तावस्वरो भवति। आमहीयववदित्यर्थः यस्ते-
मदः पवस्वदेवादिषु *देऽयआकाराकारयकाराभ्यासएनातंवो-
ग्निमिति* वामदेव्यएनादिषुस्वरसंप्राप्तअभ्यास उच्यते जातौ हो
२ हुंमा २ नामोहाइतिप्राप्नोति। उवोकारयोरेकीभावे लोप इति
यथा विश्वास्यद् २ तमोहो २ हुंमामात्तोंहाइति मकारलोपः।
एवंपरयोरपि द्रष्टव्यं। अत्रआकाराभ्यासः अभ्यासे सति ज-
ननामातद्रूपभवति तत उत्त्वं। तदुतृतीयायां अकाराभ्यासवाद्वे-
ऽपयितिपूर्ववत्। अग्निनरद्वितीयायां दक्षायपोयोदमआसानेस-

नित्यमोऽर्थं गौषूक्तेतूचातायामूने षाशब्दाभ्यासात् सम्प्राप्तिः क्रौञ्चे च हि शब्दाभ्यासा द्वर्त्तेचेकाराभ्यासात् साहीयगूर्द्दपुत्रेषु चातः परं पर्वविकारान्वक्ष्यामो

---

इत्यत्र षकाराभ्यासः । सानित्यइति निधने च नित्यमोऽर्थं सिद्धग्रहणं वैकृतत्वाल्लक्षणांतरपरामर्शार्थम् । मेघोषउह्यइति *गौषूक्तेतूचातायामूनेषाशब्दाभ्यासात्संप्राप्तिः* गोषूक्तेतुऊनेपादेद्युम्नानि मानुषाणामिति षाशब्दाभ्यासात्स्वरसंप्राप्तिः संप्राप्तिवचनाच्च अन्यत्राप्यूनेपादे पूरणार्थमभ्यासः स्यात् । यथाग्नेस्त्रिणिधनेअक्षारिति *क्रौंचे च हिशब्दाभ्यासात्* क्रौंचे च ऐन्द्यादिहरिभिरिति हिशब्दाभ्यासात् स्वरसम्प्राप्तिः । *वर्त्तेचेकाराभ्यासात्* । अभीवर्त्ते च त्वामिद्ध्यश्चाअसीति अन्त्यायां इकाराभ्यासात्स्वरसंप्राप्तिः धारणाः तइन्द्रेतिः । *साहीये अग्नेत्वंनोअन्तमद्वितीयायां द्युमत्तमो रथिदा इतिगूर्द्देष्वेतदेवोदाहरणं । उद्रुंशपुत्रेअस्तोभतिश्रितोयुवासति । *अतः परंपर्वविकारान्वक्ष्यामः । *अथपर्वाश्रया इतिपर्वाविकारात् पुनः पर्वग्रहणं । किमर्थमित्यर्थः । उच्यते पूर्वत्र पर्वैकादशस्याधिकार इत्यत्र कृत्स्नस्य पर्वविकारोवक्ष्यत इति कृत्स्नपर्वविकारार्थंपुनर्ग्रहणं *यदधिकृत स्वरतः पर्वतद्यथायोनि *ऊहगीतौ यदधिकृतं योनिवत् स्वरतो भवति । तस्ययोनिवद्गानेमत्वंलक्षणं तत्तथैव भवतीत्यर्थः । यथायोनीनीति सिद्धग्रहणं । क्वचिदुत्पत्तिपर्वोपसंग्रहार्थं यथाआदितो लोप इति नैतत्सर्वत्रेति ज्ञापनार्थं यथा स्वास्वा महीयवे चोत्तमायां तृतीयं पर्वकयातुत्वातत्रपूर्वोक्तेन न्यायेनआदितोलोपेकृतेतुत्रयाणामिति प्राप्नोति अत्रतु तृतीयाक्षरस्य लोपश्चा आदियोनिवत्कृतः । तथा दैवातिथेसखायेस्तोपइतिप्रथमोच्चेप्रथमाक्षरस्यवृद्धिः कृता ।

यदधिकृतꣳस्वरतः पर्व तद्यथायोनि स्वरविकाराद्य-
दन्यत्पर्वापद्यते तत्तेनैवोपदेक्ष्याम आमहीयवमध्यमा-
यामुग्रꣳशर्मारिरमाताꣳस्वासु कमश्वोत्तरयोरेभिर्व-
र्द्धाप्रवइन्द्रा मायः पुमध्यमायां तु मराम्ऽग्निष्टुन्नौध-
सेध्यमायां मागायातां धाजात्स्वरोत्पत्तिश्च प्राकप्र-
हूयसायाः श्यैतयसतृतीयायां चाऽनुष्टुप्सु वायिश्ये-

---

उत्तरयोस्तु प्रथमोच्चस्याभ्यास एव कृतः ऋक्स्वरवादिति ।
*स्वरविकाराद्यदन्यत्पर्वापद्यते तत्तेनैवोपदेक्ष्यामः* उक्तमतः परं
पर्वविकारानिति । तत्र पर्वग्रहणं कृत्स्नपर्वविकारार्थमित्युक्तम् ।
तत्र स्वरविकाराद्यदन्यत्पर्वादेशादित्यर्थः । तत्र यद्वैकारिकं पर्वो-
पदेक्ष्यत उत्तरत्र तेनैव वैकारिकपर्वाणि उच्चारयिष्यामः॥ *आ-
महीयवमध्यमायामुग्रꣳशर्मारिरमाताꣳस्वासु* । स्वास्वामहीयवम-
ध्यमायामुग्र ꣳशर्मारिरमाता ꣳस्वासु । स्वास्वामहीयवमध्यमाया-
मुग्रꣳशर्मारिरमाता मापद्यतेरारिमारता ३ गारे स्वासु कमश्वोत्तरयोरे-
भिर्वर्द्धाप्रवइन्द्रां* । स्वासु स्वारसाकमश्व उत्तरयोरेभिर्वर्द्धाप्रवइन्द्रा-
मापद्यते । प्रवइन्द्राप्रवइन्द्रायमादनं इति द्वितीये साम्नि । *आयः
पुमध्यमायांतुमराम्* आयः पुमध्यमायान्तु साकमश्वेएभिर्वर्द्धा-
मरामापद्यते । यजा ३२ इष्टो २ आ ३२ इतिवाहꣳ सो-
मप्रथमेमरा । *अग्निष्टुन्नौधसेध्यमायां मागायतांधाजात्स्वरोत्प-
त्तिश्चप्राक्प्रहूयसायाः* । अग्निष्टुत्सु नौधसे अग्नआयाहीति
मध्यमायां मागायता आंधामापद्यते । योनौ मागायतापक्षरा
आसीदृषा १ गा २ प १ त १ इत्यस्य रूपमापद्यते । वात्संज्ञ-
इति । स इह आंधीभवति । अग्नाविदेवायां आंःपस्वरः । हाइत्वा
सह । अस्वरोत्पत्तिश्चप्राक्प्रहूयसायाः । सूइति । *श्यैतयसतृ-

तात्यर्थां काव स्वासु भिशब्दादकारागमउदपद्मायां च वाशब्दे च नित्यमोत्वं पौरुहन्मने स्तोत्रामागायतां जास्वरोत्पत्तिश्च प्राकृतरुतायाः ॥ ९ ॥

---

तीयायां च* श्यैतनौधसतृतीयायां चामागायता आंधामापद्यते । जास्वरोत्पत्तिश्च माकूपहूयसायाः गाइतरे आ ३ इवमरसाः ३ आ ३ एषजास्वरः । *अनुष्टुप्सु त्वाथिश्येतायां *पुरोजित्याद्यांत्य-योः नौधसेत्वाथिश्येता तथामापद्यंते । योनौ वात्सन्न एषा ऽयक्षरा मागायतास्वसाराइएषात्वाइश्येताद्विपर्व्वा पुरोजित्याद्यांतयोस्तु मागा-यतालोपः । आ ३ या ३ एषा आ २१ इन्द्राइरवानां २ एषावा-इश्येतात्वद्विपर्व्वातायोनिधनेच । अनुष्टुप्स्विति बहुवचनं ककुप्सुचेति । यथा नौधसस्यषट्ककुभइति अत्र । *कावे स्वासुभिशब्दाद-कारागमउदपद्मायां च वाशब्दे च नित्यमोत्वम्* । स्वासु कावेभि-शब्दादकारागमोभवति । अभिआएत्रं स्थिते इकारस्यान्तस्थापत्तिः । अभ्यएवंस्थिते वाशब्दे च नित्यमोत्वमिति । अभ्यो ३ वाएतद्रूपं सिद्ध्यति इतरथा औवोकारयोरेकीभावे लोप इतिअभोवोतिप्राप्नोति यथाअग्नेगोराजाइत्यत्रअग्नोचेतिगीतिः । अत्र कथं ऋकारागमत्वा-दिकारस्य अन्तस्थापत्तिः(ऽया)क्रियते इति । उच्यते । उपसर्गाभावात् एवं हि स्मरत्यौदव्रजिः । नाम्यन्तादुपसर्गा३चेत्येकारः । पर्वाग्न्त्व-मिन्द्रमहावैश्वानरव्रतयोश्चेतिनित्यमोत्वमिति नित्यग्रहणं लक्षणान्त-रमदर्शनार्थमेषांषेदुह्यइति । ज्यो २ तो २ वा २ नुचस्य नित्यग्रहण-म् । *पौरुहन्मनेस्तोत्रामागायताआस्वरोत्पत्तिश्चमाक्तरुतायाः* । पौरुहन्मने अभिसोमादिषु स्तोत्रायोनिर्दृष्टा मागायतामापद्यते । स्तोत्राकदात्वसोइत्यत्रयोराजायान्तु मागायन्तवाइस्वासः । एषास्तो-त्री सर्वमद्भेरत्यर्थः । मागायता आदिष्टद्वा । मागायता आदिर्वर्द्धत इत्य-

पृश्निनि तृतीयपदान्ते च दक्षसापतिः कवीं पृतारूताद्विषां पतिः कव्युत्तमे च जमदर्ग्न्येध्यमायांरनोनुमाच दक्षसां पुत्रउत्तरयोर्नेमिस्त्वन्ना यज्ञास्युत्तमायामुत्तरा तथा नन्दामयं दासोत्तरयोर्जरिस-

थंः। जास्वरोत्पत्तिश्चप्राक्कृतायाः। अभिसोमादिषु वा इति॥

इति अष्टमस्य पञ्चमी कण्डिका।

---

*पृश्निनि तृतीयपदान्ते च दक्षसापतिः कवीम्*। पर्वविकारान्वक्ष्यामः इति प्रतिज्ञातम्। तत्र केचिदुक्ता अवशिष्यन्ते तान्वक्ष्यामः, पृश्निनियोराजादिषु तृतीयपादान्ते योनिदृष्टा दक्षसा ऊहगीतौ पतिः कवीमापद्यते। *पृतारूताद्विषां* योराजाद्यायां तृतीयपादान्ते च दक्षसा उताद्विषामापद्यते पृतनामित्यत्र *पतिः कव्युत्तमे च* उत्तमे च पादे योनिदृष्टा पतिः कवीः ऊहगीतौ सर्वत्र उताद्विषामापद्यते। रेवत्यावेति पतिः कवीः। *जमदग्न्येध्यमायां रनोनुमाचदक्षसां* जमदग्नेरभिवर्ते मध्यमायां स्तोत्रीयायां रनोनुमा च दक्षसामापद्यते सुमतौवारनोनुमाअभित्त्वाशूरप्रथमे। *पुत्रउत्तरयोर्नेमिस्त्वन्ना*। उद्वंशपुत्र उत्तरयोः स्तोत्रीययोः नेमीतिनेमिश्चक्राविवाभवत्। आगोपवित्रजभजोत्वन्नस्त्वन्नामापद्यते। त्वन्ना २ २ नुत्रा २ नाहइपिश्चाक्रोवाईवाभुवाव। *यज्ञास्युत्तमायामुत्तरा तथा नन्दां*। इन्द्रस्य यज्ञास्युत्तमायां उत्तरा द्वितीया तथा नन्दामापद्यते। *अयन्दासोत्तरयोर्जरिसङ्ज्ञातं* विधीयते अग्ने जरितर्विश्पतिरिति अयं दासोत्तरयोः जरिसङ्ज्ञातं, राग्निर्दैवोदासे उत्तरयोः स्तोत्रीययोः

ह्वातं कार्णश्रवसोत्तरयोर्नुषेजनासदावृद्धौ मार्गीयवे मागायताप्रथमोच्चं प्रसोमप्रथमायामस्यप्रत्नाद्ययोश्च घृषाजिगप्रथमायां च घृतनिधनेछतानुवामित्यत्र स्वरागमोहवि वꣳशब्दस्य चोद्भाव इदꣳसङ्ख्यातास्त्रिष्टु·

---

पर्व्वविकारं अधिकपर्वत्त्वात् जरिसङ्ख्यातमापद्यते जरिसङ्ख्यातस्य द्वितीयं पर्व इ्यगिरिति ऊहगीतौ जना ३ नपा ३ त अस्याविधानार्थं गामित्वमहाइ इति अभ्यासविषये *कार्णश्रवसोत्तरयोर्नुषेजनासदावृद्धौ*कर्णश्रवसोत्तरयोः नुषजनासदास्तोत्रीययोः नुषेजना सदावृद्धामापद्यते । दोमातिभाइभ्योमधुमाइति। *मार्गीयवेमागायताप्रथमोच्चं प्रसोमप्रथमायामस्य प्रत्नाद्ययोश्च* । मार्गीयव द्वितीयपादादौ मागायता प्रथमोच्चमापद्यते । कस्मिन्विषये ? उच्यते । प्रसोमप्रथमायोमयानयइति । अस्य प्रत्नाद्ययोश्च शुक्रंदुदुह्रे । अप ꣳसरा ꣳसीतिच । *वृषाजिगप्रथमायां च* । वृषापवस्वेति च आजिगे प्रथमायां मागायता प्रथमोच्चमापद्यते । महत्वते इति एतेषु च ऋक्स्वरवृत्तित्वात्प्रथमोच्चता । *घृतनिधनेछतानुवामित्यत्रस्वरागमोहवि* धृतनिधने इदꣳह्यनुद्वितीयायां छतानुवामित्यत्र कथं न प्राप्नोति । छतानुवौइति वमित्यत्र कथं ? उच्यते । ओवौकारयोरेकीभावात् । तेनात्र आकारस्वरआगमो भवति । हाविहो शब्दे प्रत्यये । ओपहीति ओभावः । अत्रकिं घृतनिधनेछतावनुवमितिस्वरागम इति वक्तव्ये अत्रेति अन्यत्रापि स्वरागमं दर्शयति । अग्निन शिशुदेव्ययोरिति । अग्निनरतृतीयायां पत्यौहो ३ यं तौहो इति प्राप्ते तथा शिशुप्रथमायां पत्यौहो इति पतौहो इति प्राप्ते त्यौहो इत्युक्तम् । *वꣳशब्दस्यचोद्भावः* । वꣳशब्दस्य उद्भावः । इतरथा स्वरितत्वा

ष्सुपार्थवाराहवासिष्ठकुत्सरथीयादिषु । वाराहे शुचि-
वावृधन्तातरुतां पार्थे तु वृण्याद्येर्हीर्षी प्रकृतौ ऊहे द्विती-
य मनुष्टुप्सु त्वृभुसङ्घात माज्यदोहद्यौतानयोर्जुहूस-
ङ्घात विच्छन्दःसु च वैराजर्षभारिष्टयो र्विशेष्यमपाद-

न्निपातः प्राप्तइतिच्छतानुवर्तमिति च । *इद ॐसङ्घातस्त्रिष्टुप्सु पा-
र्थवाराहवासिष्ठकुत्सरथीयादिषु* । त्रिष्टुभि पार्थादिषु इद ॐ
सङ्घातः प्रकृता भवति । अधिकारात् । त्रिष्टुब्वृत्तान्देशः । इद
ॐसङ्घातान्ताविधेतिविशेषविवक्षया सिद्धोपन्यासः । वृधन्ता ।
काम्पा । जतयकोरेति इदं ॐसङ्घातः । *वाराहे शुचि वावृध-
न्तातरुतां* । वाराहे शुचिवावृधन्तातरुतामापद्यते । *पार्थेतु
वृण्याद्येहीर्षीप्रकृतौ* । पार्थे तु वृण्याद्ये अक्षरे योनौ सुष्वाणास
इति हीर्षीमापद्यते । प्रकृतौ योनावित्यर्थः । *ऊहे द्वितीयं* ।
ऊहगीतौ तअक्षरे द्वितीयं स्वरमापद्यते । वृषाशोणादिषु । *अनु-
ष्टुप्स्वृभुसष्टुप्सुत्वृशुसंघातं* । अनुअदावावायो भवाति । कथं
विकार इति ? उच्यते । चक्षसाया अन्त्यात् तृतीयं दीर्घमक्षरं
प्रत्युत्क्रामति ह्रस्वस्तु अतीनायमभिगीयते । कृष्य वा पूर्ववत् ।
सर्वोतद्विषभ्यपश्चपुरात्तम्यत्तं च दक्षसा संहन्यत इति । पुरुत्राधरथा
३ दाधाइनकिष्टान्नियमदासुता २ इगामा ३ इति एवंद्रष्टव्यम्प-
दावात्रीपर्षादित्युक्तं । अन्ताहि उभयाहि द्वितीया चतुरयांवि-
कारप्रतिषेधः । तॐहिस्त्वरा २ जंवृषमन्ता २ मा २२ ष्टुप्सुपत्र-
स्ववाजसातयांयेसिसङ्घातमापद्यते । तयेङ्गसंघातमापद्यते । इ-
न्द्रइषेददातुनइतिप्रथमेसभुक्षणां । *आज्यदोहद्यौतानयोर्जुहूस-
ङ्घात* । आज्यदोहद्यौतानयोः इदं सङ्घातः जुहूसङ्घातमाप-
द्यते । आज्यदोहमस्तुन्वानायां द्यौताने अयाहींद्रउत्सोदेवयोः ।

योश्च दक्षसोतद्विषामतऀंहि मद्रे प्रथमोच्चस्य चतुरक्षरमाद्यं पिबासोमाम्परं योनिवत् पाष्ठौहोस्तरयो-

---

*विछन्दःसु वैराजर्षभारिष्टयोः* विछन्दःसु वैराजर्षभे तवाहऀंसोमपुरोजिसोः अरिष्टे सुतासोमाया इदऀंसङ्घातः । जुहूसङ्घातमापद्यते सुरूपकृत्नुतृतीये जुहूसंघातः सर्वांमांहत्रीणे अरिष्टे भवतः । योनिवदेव जारा भवति प्रकृतिग्रहणात् । अरिष्टे सखे । इतरथा यदि सर्वा अधिकृतैव स्यात् । तथा सति सखेन्द्रस्या एवं सति रेवशब्दस्य पवशब्दवृद्धिर्न स्यात् । तस्मादेतस्मात् ज्ञापकान्न सर्वा यथा प्रकृतिरैवेतिसिद्धं । *वाशेध्यमपादयोश्च दक्षसेतद्विषां* वाशो कईवेदोत्तरादिषु योनिदृष्टा च दक्षसा गीयते । या च दक्षसा उतद्विषामापद्यते । एवं तयोश्च दक्षसोतद्विषयोः । आदावाचापोभवति । कथं विकार इति । उच्यते । चदक्षसाया अंत्यात् तृतीयं दीर्घमक्षरंमत्युत्क्रामति ह्रस्वस्तु अन्ताद्वितीयमभिगीयते क्रुष्यते वा पूर्ववत् । सर्वोतद्विषेभ्यश्च पुराकृतमकृतं च दक्षसा संहन्यत इति । पुरुत्राचरथा १ दाधाइनाकिष्ठानियमदासुता २३ गामा २ इति एवं दृष्टव्यंमदावावायत्वादित्युक्तं । *अतऀंहि *उभयोर्हि द्वितीयायां विकारप्रतिषेधः । तऀंहिस्त्वरा २ जंतृषभन्ता ३ मो ३३ जा १ सा १२ सेदक्षासै चअन्त्यातृतीयस्य मत्युत्क्रान्तत्वात् । *मद्रेमथमोच्चस्य चतुरक्षरमाद्यं पिबासामोम्परं योनित्वत्* । पौरुमद्रे अभिसोमापुनानयोः प्रथमोच्चस्य चतुरक्षरमाद्यं पिबासोमारमापद्यते एवन्ते १ मा २२ अपो २ वसा ३२ योनौतुतयानोदं । परं योनिषभद्भवति सदक्षसावत् । इयंमदामिति । *पाष्ठौहो स्वरयोर्दैण्यौतद्विविद्वि* पाष्ठौहेर्दैणद्विषंयोनौ पर्वभेदं कृत्वागावोमिममेकानिधनैवइति

वृण्यौतद्विविद्धौ प्रमंहिद्वितीयायां वाघ्राद्धीर्योदेवां तद्विविद्धावृणीमहां वात्सप्रेवृधंतादेः कर्षणप्राप्तस्या- कर्षणमूत एकाचद्वितीय मभ्यासश्च क्षौद्रे तु वृणी- प्रथममपुरोज्यूतएकायाश्च त्र्यक्षरंसाभ्यासं मानव-

---

द्वितीया उत्तरयोः स्तोत्रीययोः उत्तरयोर्वृणीतद्विविद्धामापद्यते । एवं द्विवचनं द्रष्टव्यं द्वितीयायां स्यमातरमिति तृतीयामविज्ञ- ता इति । *प्रमंहि द्वितीयायां वाघ्राद्धीर्योदेवां*प्रमंहि- ष्ठीयद्वितीयायां स्तोत्रीयायां वाघ्राद्धीस्त्र्यक्षरा योनिदृष्टा योदे- वामापद्यतेतत्रसत्यमित्यत्र । *ताद्विविद्धावृणीमहां* । प्रमंहि- ष्ठीयायांद्वितीयायां योनिदृष्टा तद्विविद्धावृणीमहामापद्यते । वृहेत श्रूयमाताद्विविद्धाद्वितीयायां मन्त्राइतिवृणीमहां । *वात्सप्रेवृध- न्तादेः कर्षणप्राप्तस्याकर्षणम्* त्रैष्टुभोवात्सप्रे सोमः पवतायां वृधन्तादेःपर्वणः वृधन्ताआदौ यस्य पर्वणः तद्वृधन्तादिपर्व वृध- न्तात्परस्येत्यर्थः । तच्चपर्वकांपातस्यकाम्पात्वात्कर्षणप्राप्तिः । तस्य कर्षणप्रतिषेधः । *ऊतएका च द्वितीयं* तस्मिन्नेव वात्सप्रे ऊत एकाद्वितीयस्वरमापद्यते । *अभ्यासश्च क्षौद्रे तु वृणीप्रथमं *क्षौद्रे वात्सप्रे पुरोजित्यां प्रथमं सैव वृधन्ता सैव वृणी सा प्रथमं स्वरमा- पद्यते । *अपुरोजि*तस्मिन्नेव क्षौद्रे पुरोजितीत्यत्र या वृणी तस्याः द्वितीयस्वरस्यापत्तिर्भवति । *ऊतएकायाश्च त्र्यक्षरंसाभ्यासं* प्रथमस्वरमापद्यते वृणीतो २ एतदक्षरांऊतएकाया आद्यमिति । आद्यत्वात् द्वितीयस्य स्वरत्वमेव भवति । अन्धसइतित्र्यक्षरोऽभ्यासः प्रथमं स्वरमापद्यते *मानवयोः पूर्ववदक्षसापति : कवी* पूर्वे च मानवे द्वितीये पादेद्वितीये चदक्षसा पतिः कवीमापद्यते । स्वा ३ दसा १२३ इति । प १ ता २ इः १ का ३२ वा २३ः इत्येव

योः पूर्वे च दक्षसापतिः कवीॐशुर्मदाचैकर्चेलुप्तोपान्त्यो त्तरेचैतस्यामेवान्यत्रशुर्मदायाः पूर्वस्याउपान्त्यं नीचं न्यश्ववाष्ट्रीसाम्नोश्च दक्षसापतिः कवीॐरन्ध्रोत्तरेशुर्मदोत्तरयोर्जातः पृछां ॥ ९ ॥

---

मापद्यते च दक्षसापर्वतृतीयेपादेउपान्त्यं यत्पर्वसाशुर्म्मदा । एवं स्थिते ब्रवीति । ऊहगीतौचदक्षसापतिः कवीमापद्यते शत्रुघ्नादिषु *शुर्म्मदाश्चैकर्चे लुप्तोपान्त्ये:* एकर्चेपूर्वमानवे मन्द्रायोतया-शुर्म्मदाऽपाख्याता । तस्याः उपान्त्यमक्षरंलुप्यते । आदिलोपे-प्राप्तेउपान्त्यस्याक्षरस्यलोपः *उत्तरेचतस्यामेव* उत्तरे च मानवेएतस्यामेवमन्द्रायाया शुर्म्मदालुप्तोपान्त्याभवति । उत्तरेमानवेयोनौतृतीयपादोयान्त्यपर्वशुर्म्मदा *अन्यत्रशुर्म्मदायाः* उत्तरएव मानवेअन्यत्रमन्द्रयायाः सोमउष्त्रादिशुर्म्मदायाः सामनुष्त्रादिशुर्म्मदायाः अलुप्तोपान्त्यालोपोन भवतीत्यर्थः । *पूर्वस्याउपान्त्यन्नीचं-न्यश्वत्वाष्ट्रीसाम्नाश्चदक्षसापतिः कवीं *वान्यश्वेसामउष्त्रादिषुगायत्रीत्वाष्ट्रीसाम्निचपवस्वदक्षसाधनायांचदक्षसायोनिदृष्टा । ऊहगीतौपतिः कवीमापद्यते । वाचमश्वेयौद्वनोद्वितियपादाद्वितीयपर्व च दक्षसाद्रा ३ तै ३ सा खा ३ इति त्वाष्ट्रीसाम्न्यपिपाद्वितीयपादाद्वितीयमेव पर्वचदक्षमा उ २ मा २ सा ३ ता ३ इति *रन्ध्रोत्तरेशुर्म्मदौत्तरयोर्ज्जातः पृछां* उत्तरेअक्ष्णारन्ध्रतृतीयपादाद्यपर्वयोनौशुर्मदापारार्यिपिशाएषाउत्तरयोः स्तोत्रीययोः जातः पृछामापद्यते । आर्बुदंवृत्रेति अत्रयो नयोर्विशेष इति उच्यते । शुर्म्मदायाः द्वितीयमक्षरमभिगीयते । जातः पृछायापथर्म्भवतीति एष विशेषः । पुनानोरवापेकाद्वितीपादेयानांॐसो इति ॥

इति अष्टमस्य षष्ठी कण्डिका समाप्ता ॥

श्यैनेप्रेष्ठं वाजुहोतामयोनावुष्णिक्षु च कूलीये वैश्व-मनसेराधीतमासख्यइन्द्रां वंᳪशीयेगायन्त्याद्ययामा-छाहोतारव्यौ चतुरक्षरशः परयोस्त्र्यक्षरेछापञ्चाक्षरे-होता द्यक्षरेन्यत्र सुज्ञानेनिधनमेकिनेस्वर वाचः साम्नि स्वासूत्तमायां तृतीयपादादौ षदक्षसोतद्विषां

---

*श्यैनेप्रेष्ठं वाजुहोताम्* गायत्र्यौश्यैनेप्रेष्ठं वा योनिदृष्टा उत्तरा-दि आजुहोतामापद्यते मध्ये तृतीया भवति *अयोनौ* योनौ तु प्र-तिषेधः । *उष्णिक्षु च कूलीये*रोहितकूलीये योनिदृष्टाप्रेष्ठं वा इ-न्द्रमच्छायां आजुहोतामापद्यते । *वैश्वमनसे राधीतमासख्य इन्द्रां* वैश्वमनसे द्वितीयपादादौ राधीतमापवस्त्वद्देवाया सख्य इन्द्रामाप-द्यते । एतयोः को विशेषः राधीतमायास्तृतीयमक्षरं नीचम् । राधी २ तमा २२ ऊ १ वा ३२ सख्य इन्द्रायास्तृतीयमुच्चं,सा १ ख्य इन्द्रो ३२ तथाहᳪसोम चतुर्थे एष विशेषः । *वंशीये गायन्त्याद्यायामाछाहोतारव्यौ चतुरक्षरशः* । वंशीये गाय-त्र्यायाद्यायामाछाहोतारव्यौ चतुरक्षरशौ भवतः । अग्निं वो वृध-न्तायां प्रथमे अछाहोतारं वी । अग्निदूतायां विशेषार्थं चतुरक्ष-रश इत्युक्तम् । प्रज्ञाणस्त्वायाहो ३ अछांयातका २३३ ता २ उहोता *परयोस्त्र्यक्षरेच्छापञ्चाक्षरे होता* गायत्र्युत्तरयोः अच्छा त्र्यक्षरा भवति । होता पञ्चाक्षरा भवति तदिन्द्राहो ३ अर्थं चेताना इति । *द्यक्षरेऽन्यत्र* आत्वाविशंत्विदव सपतिसूत्रेण सोमाश्रमथमः । परिवायोगः सुतेष्विन्त्यत्र अनयोर्द्व्यक्षरे अछा-होतातरव्यौ भवतः । विदा ३ हो १ इवा ३३१ र्वा *सुज्ञाने निधनमेकिनेस्वरं* सुज्ञाने निधनाजया एकिने स्वरं भवति । कानिकस्वदप्रकारः कृष्टो भवतीत्यर्थः *वाचः साम्नि स्वासूत्त-

लौशयोः पूर्वेवारवन्तां तु विशुष्मामुत्तरेचतुर्थोच्चं द्वि-
तीयस्तुं ह्रस्वारूपयोश्च तथाशार्गेतृतीयोच्चं प्लवेवारवं-
तास्तिस्रस्तृतीयेपादे द्वितीयंतुष्णिक्षु चतुरक्षरा प्रथ-

---

मायां तृतीयपादादौ च दक्षसो तद्विषां* । वाचः साम्न योनि-
ष्ठा च दक्षमा स्त्रामुत्तमायां स्तोत्रीयायां तृतीयपादादौ उत-
द्विषामापद्यते राजा ३ दा ३ इवा ३ । *लौशयोः पूर्वे वारवन्ता
तु विशुष्मां *अत्र किं प्राप्तं ओभूतं चेदिति सन्निकर्षः त्रिव-
मत्पये सन्निकृष्यत इति प्रापूर्वयोरिति सन्निकर्षः । ततो वारा-
पत्तिः सूत्रेण प्रोवारां प्रथमपरिघः अत आह लौशयोः पूर्वे वा-
रवन्ता तु विशुष्मामापद्यत इति । *उत्तरे चतुर्थोच्चं द्वितीयं*
स्वरमापद्यते । द्वितीयपादान्ते उपोत्तमं पदं चतुर्थोच्चं असा-
वि सोमगोत्रित्पवस्वयोः षद्स्मो ३अ भिगा अचिक्रदा ३ षा
इन्दो भुवनेष्वर्पिताः । *ह्रस्वारूपयोश्च* । ह्रस्वायां च पञ्चनिध-
नवैरूपान्तयोः द्वितीयपादादौ चतुर्थोच्चम् । शतं भूमिरुतस्यो ३
वा ३ एतद्दृहगीतौ अभिसोमादिषु यथावोत्तरयोश्च द्वितीयं स्वर-
मापद्यते पवंतेमदियं एवं । *तथा शार्गे तृतीयोच्चम्* यथा
लौशादीनां चतुर्थोच्चस्य द्वितीयस्वरापत्तिः । एवं शार्ङ्गेपिऽयं
जतायां । *प्लवे वारवन्तास्तिस्रस्तृतीये पादे* प्लवे वारवन्तायोनौ
पुनानः सोमायां तिस्रोवारवन्ता आरत्नावित्यत्रासिद्धोपन्यासो
विशेषविवक्षया । *द्वितीये तूष्णिक्षु* उष्णिक्षु गीयमानस्य
सखाय आनिषीदतायां वारवन्ता द्वितीयपादे भवन्ति । *चतु-
रक्षराः प्रथमा ३ त्र्यक्षरे परे* । योनिवत्सर्वासां चतुरक्षरत्वे
प्राप्ते विशेष उच्यते । चतुरक्षराः प्रथमापूजना ३ नापा ३ त्र्यक्षरे

माञ्यक्षरे परे पूर्वे जनित्रे च दक्षसोतद्विषा मतं वस्तृतीयायां तवमांडवे इदावासिष्ठे चात्रैव तृतीयाष्टमं वृद्धं प्रथमायाॐरुणसाम्नि च घृतवत्यां तिथेचयोनाद्यायॐ शुध्यमानयोश्च द्वितीयं विशीये धयादि

---

परे प्रा ३ गा ३ या ३ ता ३ *पूर्वे जनित्रे च दक्षसो तद्विषा* पूर्वे जनित्रे द्वितीयपादान्ते योनिदृष्टा च दक्षपा अभिसोमादिषु द्वितीये पादान्ते उतद्विषामापद्यते । *अतंवस्तृतीयायां* तंवस्तृतीयायां तु द्वितीयपदान्ते च दक्षसैव *तवमाण्डवे *तवाहॐ सोमायां च माण्डवे तृतीयपादादौ योनिदृष्टा च दक्षसा उतद्विषामापद्यते । पू ३ रू ३ णा ३ ई वा ३ *इदा वासिष्ठे च* वयमेनायां च वासिष्ठे मध्यमपादयोरन्ते योनिदृष्टौ च दक्षसा उत्तरयोः स्तोत्रीययोः । उत्सोदेवायां च उतद्विषामापद्यते । *अत्रैव तृतीयाष्टमं वृद्धम्* अत्रैवमइदा वासिष्ठे तृतीयपादस्य अष्टममक्षरं वृद्धं भवति तस्मानु अग्न सवने सुतामिसत्र *प्रथमायाॐरुणसाम्नि च घृतवत्याम्* । प्रथमायामेव वरुणसाम्नि च घृतवतीत्यत्र तृतीयपादस्याष्टममक्षरं वृद्धं भवति ऊहगीतौ वृद्धप्रतिषेध इत्यर्थः *तिथे च योनाद्यायं* दैवातिथे च योनौ आद्यायां तृतीयपादस्य प्रथममक्षरं वृद्धं भवति ॥ उत्तरयोः प्रतिषेधः *शुध्यमानयोश्च द्वितीयं* । शुध्यमानयोश्च योनावेव तृतीयपादस्य द्वितीयमक्षरं वृद्धं भवति । शुध्येऽस्मा ३ इदेहीति । मानवयोः दीदेथकण्व इति । ऊहगीतौ प्रतिषेधः *त्रिशीयधयादिमायां भे प्रत्यये प्रथमोच्चान्त्यस्य वृद्धिरुतद्विषापत्तिः कर्वौ* सदोविशीये अधयादिमायां स्तोभे प्रत्यये प्रथमोच्चान्त्यस्य वृद्धिः । इमा २ च वा २ ईमूर्थेनना ३ ईति वा उत-

मायां भे प्रत्यये प्रथमोद्यान्त्यस्य वृद्धिरुतद्विषापस्तिः कवीं साहीये शताद्वितीयं सकर्षात् तथा सर्वत्र संन्यायो मन्द्रश्चतुर्थमयोना वैडकौत्से च वसुरुचायामोवाद्यस्य लोपोवाशब्दे च नित्यमोत्वं क्षितेच हा-

---

द्विषा च योनिर्दृष्टा सापतिः कवीमापद्यते या २ अर्षा २२ ता २१ इति । *साहीये शताद्वितीयं संकर्षात्* । सत्रासाहीये शताद्वितीयं स्वरमापन्ना सङ्कर्षात् कारणात् न्यंवार्षाज्ञातंतिन्यवार्षे ३ वान्त । सिद्धोपन्यासोविशेषविवक्षया । *तथा सर्वत्रसंन्यायः* यथाहि योनौ सङ्कर्षाद्वितीयस्वरापत्तिः एवं सर्वत्र मतायां द्वितीयस्वरापत्तिर्न्यायोवेदितव्यः । असङ्कर्षोपि ऊहगीतौ अ-श्यत्रबुवते । यत्र संकर्षोनास्ति । तत्र यथाप्रकृत्सेव तृतीयादि-शताभवन्ति शता ३ का १२३२ व: ३ विदा २२ ईषा ३ ऊ ३ वा *मन्द्रश्चतुर्थमयोनौ* साहीयएव मन्द्रस्वरस्थोवर्णश्चतुर्थं स्वरमापद्यते ऊहगीतौ *ऐडकौत्सेच* ऐडकौत्से अयंपूषादिषु मन्द्रस्वरस्थश्चतुर्थस्वरमापद्यते । *वसुरुचायामोवाद्यस्यलोपः* प्रसङ्गादैडकौत्सग्रहणं इदानीं प्रकृतमेवोच्यते वसुरुचायां सत्रा-साहीयेरुचा या आद्यस्य वर्णस्य लोपः । इकारस्य लोप इत्यर्थः । तथासतिवसुरुचोदिव्याअभिर्ड ३ वा ३ एतद्रूपं भवति एवंस्थिते उत्तारणसूत्रेण ऽभाव उच्यते । *वाशब्दे च नित्यमोत्वं*वा-शब्दे च प्रत्यये नित्यमोत्वं । तथासति भिशब्दस्य इकारे लोपे सति वाशब्दे प्रत्यये ओत्वं नित्यमापद्यते । वसू २ रुचोदिव्याः अभोवेतिरूपं भवति । *क्षितेचहाशब्दे* । ऐडे च सैन्धुक्षिते हाइशब्दे प्रत्यय असाध्यंपवस्वदेवयोः पूर्वस्य स्वरस्य व्य-ञ्जनस्य च ओत्वं भवति । योनौ विसर्जनीयस्य अक्लोपदर्श-

शाब्दे मैधे चायोनौ बोधीये वच्यन्ते वामित्यत्रं स्व-
रागमो मान्तश्च रागं दोविशीये स्तावहारोपाया-
वांतास्थे दौपूर्वोहांतौ ॥ ७ ॥

श्रीपर्ष्णु विशीयाघायां तद्विविद्धाष्टणिमहां वै छ-

---

नात् । अग्निर आह २ इति । अत इदमुक्तं माभूद्योनिवद्भाव
इति । *मेधे चाऽयोनौ* मैधातिथे च हाशब्दे प्रत्यये पूर्वस्य स्वर-
व्यञ्जनस्य चओत्वं भवति । योनौ तु व्यञ्जनस्य न लोपोदृष्टः ।
माचिदन्यदो ३ हा ३ इति । अत्रापि योनिवद्भावोमाभूदिति
उक्तं ततः किं भवति । मुहुरुछोहाइ इति स्वरलोपे ओत्वं
भवति । *बोधीये वच्यन्तेवामित्यत्र स्वरागमोमान्तश्चरागम्* ।
जराबोधीये वच्यन्तेवायांस्वरागमोभवति । कस्मिन्प्राप्त इद
मुच्यते । उच्यते । वच्यन्ते वोवा एवंप्राप्नोति । ओवौकारयो-
रिति कस्मात्स्वरागमः क्रियते । वच्यन्ते वाआकारः स्वरागमो-
भवति । तस्मात्तस्य स्वरस्य ओत्वं भवति । ततः वच्यन्तेवामोस्त्वे-
तिप्राप्नोति । ततः आह । मान्तस्वरागमेति । नकारान्ते पदे पूर्व
स्वरे च परतः स्थित इति तथा आकारोरक्तोभवतीति । अत्रमकार-
त्वाद्रागोन प्राप्नोति । अप्राप्तोरागोवचनेन क्रियते मान्तश्च-
रागमिति । *दोविशीयेस्तावहारोपायावान्तास्थेदौपूर्वोहान्तौ* ।

इति अष्टमस्य सप्तमी कण्डिका ॥

---

*श्रीपर्ष्णुविशीयाघायांतद्विविद्धाह्णीमहा* । यत्रायश्रीपर्ष्णु
विशोविशीय आघायां स्तोत्रीयायां तद्विविद्धाह्णीमहामापद्यते ।
इराइराव् । *वैछन्दसे सपन्तेदिवानक्तामथमम्* वै छन्दसे सपन्ते

न्दसे समन्तेदिवा नक्ता प्रथमं दान्त्यस्य वृद्धिर्वि-
ष्टारपङ्क्त्यां किमित्रिबृहदेव्ययोर्वृणी प्रथमं चेसोदैर्घे
पराङ्गं नित्यमाचार्यनियमात् पूर्वाङ्गं च वृदेव च पूर्व-

---

द्दहामऊधः पाहिविश्वस्मात् । इमᳬस्तोमामित्ति च दिवानक्ता
प्रथमं स्वरमापद्यते । योनौ द्वितीयं पर्व दिवानक्तात्वं होता-
नोऽधरा इ ःएतेषु त्रिषु प्रथमं स्वरमापद्यते । *दान्त्यस्य वृद्धि-
र्विष्टारपङ्क्त्यां* पर्वमध्यत्वाद्योनिवत् वृद्धिरुच्यते । पर्वमध्यपादा-
न्त्यां वृद्धिवचनादिमᳬस्तोमं समन्ते पादादिकपर्वप्रस्तावो-
न योनिवदष्टाक्षरः प्रस्तावो भवति । *किमित्रिकबृहद्वामदेव्य-
योः वृणीप्रथमं *स्वरमापपद्यते किमित्तायां वृहति त्रिकद्रु-
कायां पञ्चनिधनवामदेव्ये बृहतोः प्रथमं स्वरं । *त्वेसोदैर्घे प-
राङ्गं नित्यमाचार्यनियमात्* । त्वेसोमायां दैर्घे श्रवसे परा-
ङ्गं नित्यमलोपोभवति । गकारस्य किमुक्तं भवति । वृहदोहे-
त्येतस्मिन्नपि कल्पे कथं तु गकारेणास्य प्रत्यारम्भ इति । अ-
न्यथाबृदोहेत्येतस्मिन्नपि कल्पे दकारेणास्य प्रत्यारम्भः स्यात् ।
कस्मादेवमेव भवति । उच्यते आचार्यनियमात् । ऊहवशादि-
त्यर्थः । ऊहकारोहि द्वयोरपि कल्पयोरनुषङ्गं गकारेण प्र-
त्यारम्भं कुर्वन् उभयत्र गकारो भवति । इतरथा पूर्वेष्युभयं
मानवेति तस्मादुभयत्र गकारेण प्रत्यारम्भ इति सिद्धम् ।
*पूर्वाङ्गं च* चशब्दात्पूर्वाङ्गं च नित्यमलोपितं भवति । अत्र
कथं प्राप्नोति । अन्तःपादिकानां व्यञ्जनानां स्तोभान्ते विरते
लोपो भवतीति । सन्धौ यत्र उभयोरपि पूर्वाङ्गपराङ्गयोः स-
ᳬहितायामतिहारो भवति । यथा हाविष्कृते त्वंसुतोमदाहाउन्ता-
माहातिपूर्वाङ्गं भवति पदान्तीयानां जनानां प्राक्स्तोभभावो भव

कल्पः शाकुन्येषस्य मध्यमायामकाराभ्यासोऽग्निर्वो-
वाजीयद्वितीयायां चैकारे च नित्यं दीर्घत्वं शाकुनि
कौत्सेहि शब्दोवृद्धः प्रकृतावूहे दीर्घः सर्वत्र संयोगे
ह्रस्वो वार्शोऽभिद्रोणग्रं शर्मामिषन्तोकायां सन्निवि-

---

ति। यथा त्वाष्ट्रीसाम्नि देवान् होइङ्गछो ३ हा ३ तस्मादन्तः
पदिकत्वादत्र पराङ्गभावे प्राप्ते पूर्वाङ्गं च अलोपितं भवति।
प्राकृस्तोभात्पदान्तव्यञ्जनपदलोप इत्युक्तं। तस्मादत्र पदान्तवत्
प्राकृस्तोभाद्भावोद्रष्टव्यः शश्वच्छश्वदितिवत्। *तद्देवचपूर्वक-
ल्पः* । उक्तं पदान्तवत् प्राकृस्तोभाद्भवति। *शाकुन्येष-
स्यमध्यमायामकाराभ्यासः* । शाकुन्येषस्य धारयोति मध्यमायां
स्तोत्रीयायां अकाराभ्यासो भवति स्वरपूरणार्थाक्रीडन्नून्रिम-
राय ३ अपामिति एकः ओकारः रकारे द्वितीयः । अपामिवे-
सत्र अकारस्य ह्रस्वस्य वचनात् दीर्घत्वं शाकुन्येकारइति ।
*अग्निर्वोवाजीयद्वितीयायां च* । आग्नवोदेवमग्निभिरिगिरा-
योवाजीये द्वितीयायां स्तोत्रीयायां आकाराभ्यासः । अयस्मते-
प्रजनन्तक्रुमाहो इआस्तियानुवेति *एकारे च नित्यन्दीर्घत्वं शा-
कुनि* । एकारे च प्रत्यये ह्रस्वस्याक्षरस्य दीर्घभावः नि-
त्यग्रहणादत्रैव तृतीयायां पवस्वमधुमत्तमा इतितृचं । *कौत्से-
हिशब्दोवृद्धः प्रकृतौ* । ऐडकौत्सेपाहिद्रोतिप्रकृतौ योनाविसर्थः
हिशब्दाद्वृद्धेः सिद्धोपन्यासोविशेषविवक्षया । *ऊहे दीर्घः स-
र्वत्र* । ऊहगीतौ अभीनोवादिषु सर्वत्र दीर्घोभवति । द्वि-
मात्र इत्यर्थः । *संयोगे ह्रस्वः* ऐडकौत्स एव हि शब्द,
संयोगे प्रत्यये ह्रस्वः भवति परित्यपरिस्यस्वादिषु । *वार्शो-
ऽभिद्रोणोग्रं शर्मामिषन्तोकायां *वार्शे अभिद्रोणा योनिहृष्टा

द्वांप्राणा सर्वासु मनाज्येन्नुमूतयावायोरनीमुत्तरयो यज्ञामहामित्रोत्तरयोश्चतुरक्षरायां विधायां वाजीवा-जापिवासोमो मुत्तरे जनित्रे पुरोजित्यामुद्गीथाद्य-स्य दीर्घत्वं दन्वते प्रथमऋध्यवप्रियामुत्तरयो वार्त्र-तुरे गीथाद्यं प्रथमोच्चं मागायतां द्वितीये च पादे सा-

---

वन्हिमद्या १ अर्णासोमोत्तमायां अभिद्रोणाउग्रेॅशर्म्मामाप-द्यते । असमभ्यसो । *तद्विविद्धां माणासर्वासु* । माणातृचे सर्वासु स्तोत्रीयासु अभिद्रोणातद्विविद्धामापद्यते । हिन्वत्रितश्चेदि-षु । *मनाज्येन्नुमूतयावायोरनीमुत्तरयोः* गोतमस्य मनाज्येन्नु-मूतायां योनिदृष्टा कण्वे ३१ सुसु ११ इति उत्तरयोर्वायो-रनीमापद्यते रा २ ध्ये २ देयायज्येष्ठन्तदाविष्ठेनि । *यज्ञामहामि-त्रोत्तरयोश्चतुरक्षरायां विधायां वाजीवाजापित्रासोमया । *यज्ञा यज्ञीयर्क्षु महावैश्वामित्रे उत्तरयोः स्तोत्रीययोश्चतुरक्षरयोर्वै-कृतायांवाजीवाजापिवासोमामापद्यते । ब्राह्मणादिन्द्राधसऊर्जः ना ३ पानं सहिना १ भुवव वा ३ वांजीवाकस्तमिद्रेतिवाजी-वाजा २ *उत्तरे जनित्रे पुरोजित्यामुद्गीथाद्यस्यदीर्घत्वम्* । *उत्तरे जनित्रे पुरोजित्युत्तमायां उद्गीथाद्यस्य ह्रस्वस्याक्षरस्य दीर्घत्वं । पा २ मा ३ इति । *दन्वते प्रथमे ऋध्यव प्रि-यामुत्तरयोः*वैदन्वते प्रथमे समाप्तोत्त्वऋध्या योनिदृष्टा-उत्तरयोः स्तोत्रीययोः इवप्रियामापद्यते अप्रेतमद्याद्वितीयऋ-ध्य । *वार्त्रतुरे गीथाद्यं प्रथमोच्चं मागायतां* वार्त्रतुरे उ-द्गीथाद्यं प्रथमोच्चमाद्यन्ददिपरागां मताइत्यर्थापत् प्रकृतं प्रथ-मोच्चे सॅहन्यत इति सर्वामेतीति । उदाहरणग्रहणात् । मागाय-तामापद्यते । पवस्वनानदुग्यवस्थोविशेषः । द्वितीये च पादे सास्वा-

चान्त्वान्त्वाज्योतिर्वरुणसाम्न्याद्यान्त्ययोस्तृतीयो-
च्चात्परन्तमु तृतीयायां तु त्रिभाक्चतुर्थो मध्ये निध-
नानिनिगदवृत्तीनि प्रयोगवत्स्वाध्याये गिरागिराप्रभ-

---

तन्त्वा॥ । वात्रेतुर एव द्वितीये पादे सान्त्वासङ्घातः सात्त्वामर्चा-
म इत्य ३ ता २ इत्येषसङ्घातः तन्त्वासङ्घातमापद्यते । तन्त्वागिरः
सुष्टुतयोवाजया ३ ती २ अत्र ऊहगाने योनिवद्विरासा इति । तंत्वास-
ङ्घातं द्विपर्वाणमेवमापद्यते तन्त्वामापद्यत इति । ननु पर्वैकत्वं वि-
वक्षितं, किंतर्हि ? सङ्घातान्यत्वं भवतीति विवक्षितम् । तस्माद्योनिव-
त्पर्वद्वित्वमेवेति । अन्ये तुएकपर्वसङ्घातादेव पर्वैकत्वमेव मन्यन्ते ।
॥ज्योतिर्वरुणसाम्न्याद्यान्त्ययोस्तृतीयोच्चात्परंतमु ॥ज्योतिर्यज्ञस्य
वरुणसाम्न्याद्यांतयोः तृतीयोच्चात् परं तमुसङ्घातमापद्यते तमू-
२ अभिप्रनायतेद्दामिति । किमुक्तं भवति । योनौ घृतवतीचतुर्थ-
एकमक्षरं आद्यायां द्वे अक्षरे चतुर्थे द्वितीयायां यथायोन्येव
॥तृतीयायां तु त्रिभाक्चतुर्थः॥ आद्यान्त्ययोरितिवचनात् तृती-
यस्यापि त्रिभाक्चतुर्थः प्राप्तः, अत आह तृतीयायां तु
त्रिभक्चतुर्थ इति । अत्र चतुर्थस्वर अक्षरत्रयं भजते ।
॥मध्येनिधनानि निगदवृत्तीनि प्रयोगवत् स्वाध्याये॥ मध्ये-
निधनानि किंभूतानि ? निगदवृत्तीनि प्रयोगवत्स्वाध्याये-
स्वाध्यायशब्देन ऊहः स्यात् अभिप्रेतः प्रयोग । कथं
प्रयोग इति ? उच्यते, आर्चिकानिधनन्याये स्तौभिकं
यावदक्षरं क्रुष्टाक्रुष्टं भवेत् स्वार्यमन्तोदात्तं दृष्टेस्वरम् । तथा प्र-
थमाद्यातृतीयात् स्वरान्तश्च । ३१ यो २ दृष्टे २२ । ॥गिरा-
गिराप्रमनसांसिषन्तस्युषश्चेत्यनुब्राह्मणंस्वाध्याये॥ गिरागिरा-

ऋगांऽसिषंतस्थुषश्चेत्यनुब्राह्मणांऽस्वाध्याये देवतानामधेयान्यथ निरुक्तेष्वेके यथादेशं च कालवाविनामपि प्रवचनविहितः स्वरः स्वाध्याये तथा शाठ्यायनिनांऽसमानोदर्केषूदर्कस्योद्धारः पूर्वयोः स्तोत्रीययोर्महेनायां तूपात्यं पदं प्रतिस्तोत्रीयं वाजीये

---

ढीनिगस्थुषांतानि अनुब्राह्मणांऽस्वाध्याये ऊहगीतावित्यर्थः । *देवतानामधेयान्यथ निरुक्तेष्वेके* देवतापरोक्षनामधेयानि स्वाध्याये ऊहे एके तथैवोहे यथा राणायनीयाः । पुनानइन्द्रोधारयेति बार्हदुक्थतथा सफे मियंयज्ञायेति । *यथादेशं च* यच्च ब्राह्मणमनु शब्दः सूत्रकारैरादिश्यते तच्च ऊहगीतौ तथैव भवति द्विपदमभ्यस्यन्निति । नौधसस्य षट्ककुभ इति मध्यमां तृचस्य प्रकृतिं कृत्वेति रथन्तरादीनां ककुबुत्तर्ये ककुबुत्तरे नौधसे द्विपदमभ्यस्यन्निति आ २३३ इन्द्रगी २ भिर्नवा ३ मा ३ हा २ इ १ । उत्तमायामप्येवम् । *कालवविनामपि प्रवचनविहितः स्वरः स्वाध्याये* कालवविनामपि प्रवचनविहितः स्वरः । प्रवचनशब्देन ब्राह्मणमुच्यते । प्रोच्यत इति प्रवचनम् । स्वाध्यायशब्दः पूर्ववत् । *तथा शाठ्यायनिनाम् *तथा शाठ्यायनिनामपि प्रवचनविहितः स्वरः स्वाध्याये । ताण्ड्यब्राह्मणादिब्राह्मणविहितः स्वरः स्वाध्याये ऊहगाने स्वाध्यायशब्दे च ऊहगानमुच्यते । *समानोदर्केषूदर्कस्योद्धारः पूर्वयोः स्तोत्रीययोः* । समानमुदर्कं येषु तानि समानोदर्काणि तेषु समानोदर्केषु उदर्कशब्दोऽन्तरवचनः । समानं समाप्तिषु । अन्त्यस्योद्धारः यथा परिस्त्रानायां प्रदेषु सर्वथा असीति तथा च एकइ त्रैककुभे चतुरक्षरस्योद्धारः पादवदृष्टेः । उ-

सङ्घातैकत्वात् तथाऽतिच्छन्दःसु नित्यवत्सासु त्रिकबृहति च पर्वैकत्वा दिमाᳬस्तोमसमन्ते च द्व्यक्षरं पदᳬसंकृष्टत्वात् ॥ ८ ॥

प्रतिस्तोत्रीयमार्चिकानि निधनानि स्तोभाङ्गभूना-

ङ्णिगन्त्यं चतुरक्षरं पादत्वादिति । *महेनायां तूपान्त्यं पदं प्रतिस्तोत्रीयं वाजीये सङ्घातैकत्वात्* पूर्वोक्तेन न्यायेन द्वयोः पादयोरुद्धारः प्राप्तः समानोदर्कत्वात् ब्रवीति महेनायां रायोवाजीये उपान्त्यं पदं प्रतिस्तोत्रीयं भवति । तद्धि कस्मात् ? सङ्घातैकत्वात् । *तथातिच्छन्दस्सु नित्यवत्सासु* यथा महेनायां तथाऽतिच्छन्दस्सु प्रोष्वस्मैत्रिकद्रुकयोः सङ्घातैकत्वादेव । *त्रिकबृहति च पर्वैकत्वात्* त्रिकद्रुकायां बृहति पर्वैकत्वात् प्रतिस्तोत्रीयमष्टाक्षरस्यानुद्धारः *इमᳬस्तोमसमन्ते च द्व्यक्षरं पदᳬसकृष्टत्वात् * याग्नाः इयोग्ना ३ इन्वमादित्यातादन्त्यानष्टुभस्यग्ना इति सङ्कर्षः ।

इति अष्टमस्याष्टमी कण्डिका ॥

*प्रतिस्तोत्रीयमार्चिकानि निधनानि* । ऊहगाने योनिवत् स्वरा इति ऊहः प्रकृतः । तत्र ऊहस्वाभाव्यं वर्ण्यते अत आह । कानिनिधनानि प्रतिस्तोत्रीयमार्चिकानिनिधनानिभवन्तीतिसिद्धोपन्यासः पूर्वयोः स्तोत्रीययोः उपायप्रतिषेधार्थः । *स्तोभाङ्गभूतानि च* । येषां निधनानां स्तोभाङ्गभूतः प्रतिस्तोत्रीयं प-

नि च पर्वाङ्गभूतानि च तथाहायिकारस्वारपदानुस्वराणाम् अन्तः सामिकानि च स्तौभिकानि सामान्तिकानि सामान्ते सर्वत्राऽन्यत्रगणगीतिभ्यः प्रतिस्तोत्रीयं बोधीयधुरामस्त्रयोः कण्वबृहति च निधनोपायान्ताः स्तोत्री-

---

वति यथा पदनिधने काण्वे बृहन्निधने वार्कजम्भे । *पर्वांगभूतानि च *प्रतिस्तोत्रीयं भवन्ति । *तथाहायिकारस्वारपदानुस्वारा-णां* हायिकारस्वारपदानुस्वाराणां प्रतिस्तोत्रीयं हायिकारो भ-वति । पदानुस्वाराणां, स्वारग्रहणाच्च वाङ्निधनानां प्रतिस्तोत्रीयं निधनानामभावः यथा उद्वद्भार्गवे सामराजेऽमार्विसोमायां अत्र स्तो-भाङ्गभूतोपि प्रतिस्तोत्रीयं निधनं च भवति । उत्तमायामेव भवति । *अन्तःसामिकानि च स्तौभिकानि* । अन्तःसाम्नि च साममध्ये यानि स्तोत्रीयं भवन्ति यथा स्वःपृष्ठोत्सेधादिषु । *सामान्तिका-निसामान्ते सर्वत्र* यानि स्तौभिकानि निधनानि बर्हिर्निधनानि तानि तृचस्य साम्नः अन्ते भवन्ति यथा आमहीयवरौरवश्यै-तादिषु *अन्यत्र गणगीतिभ्यः* । गणगीतिषुतु बर्हि-र्निधनेषु वारवन्तीयादिषु यज्ञाएह्युषु तन्तेश्रुधीहवादिषु । तथा एनामत्युइमाउवादिषु । तथा वैराजर्षभमरारयोः पित्रासोमा-दिषु एतेषु सामसु अन्ते बर्हिर्निधनानि भवन्ति । *प्रतिस्तोत्रीयं बोधीयधुरामस्त्रयोः* सामान्तिकानि सामान्ते सर्वत्रेति प्राप्ते इद-मुच्यते । प्रतिस्तोत्रीयं निधनं भवति त्वामिधादिषु *कण्वबृहति च *प्रतिस्तोत्रीयं निधनं भवति त्वामिध्यादिषु* निधनोपायान्ताः स्तोत्रीयाः सर्वत्र* बर्हिर्निधनेष्वेवामहीयवनौधसश्यैतादिषु सामान्ते सत्स्वप्राप्तौ सामान्तिकत्वात् । किन्तु उपायार्थमुच्यते निधनोपाया-न्ताइहत्तिउपायः प्रतिस्तोत्रीयं भवतीत्यर्थः उपायोयज्ञकर्मणि ।

याः सर्वत्रेडाभिरेडानामिडान्ताः श्रुधियांताः श्रुध्यं संक्रकसामः पगत्रयो रभ्यस्तान्ताः पुष्यायरायिष्ठयो रुगत्यंताः प्रवदुद्दत्सामराजेष्वेकारान्ताः सुज्ञाने स्तो-भश्च सामाद्यः सामांते यथान्यायः। रहस्ये तूद्धारः तस्य लक्षणोद्देशः पर्वांगभूतस्यानुद्धारः त्रिरुक्तस्य सामादावाद्यं वचनं यथाभद्रश्रेयो रिष्टशाकरर्ष-भस्वाशिरामर्कसप्तहैकवृषाणा९ श्रेयसि अहोशब्द-स्य लोपो जंभोत्तरस९स्तोभांजोरूपाणा९ सामां-

*इडाभिरेडानामिडान्ताः* इडाभिरेडादीनां पृष्ठ्यादीनां इडा-न्ताः स्तोत्रीया भवन्तीत्यर्थः। *श्रुधीयान्ताः श्रुध्ये* श्रुध्ये श्रुधियां ताः स्तोत्रीया भवन्तीत्यर्थः *स्त्रसामाः पगत्रयोः* पगत्रयोः संक्रमन्ताः स्तोत्रीया इति। *अभ्यस्तान्ताः पुष्ययुरायिष्ठयोः* अभ्यस्तान्त पूर्वाकपुष्यरायिष्ठयोभवन्ति पूर्वमभ्यस्तं परोऽभ्यासइति। *उगत्यन्ताः प्रवदुद्दत्सामराजे-षु* एतेषां उगत्यन्ता भवन्ति तेनादृशिष्टेषु च यथा पार्थ-सम्पात्राराहकुत्सरथीयत्रातसमादिषु। *एकारान्ताः सुज्ञाने स्तो-भश्च सामाद्यः सामान्ते यथान्यायं* ऊहस्वभावः प्रकृतः। तत्र सा-माद्यः सामान्ते यथान्यायं भवति। आद्यन्तपूर्वेषु द्वन्द्वशिष्टेषु च यथान्यायं आद्यन्तदर्शनात्। *रहस्ये तूद्धारः* रहस्ये तु स्तोभस्य उद्धारः एव राजनादिषु *तस्य लक्षणोद्देशः* वर्तिष्यते *पर्वाङ्गभूतस्यानुद्धारः* यथाबृहद्रथंतरयोः तदिदा-राजने। तृचान्तप्रयोगः *त्रिरुक्तस्य सामादावाद्यं वचनं यथा भद्रश्रेयोरिष्टशाकरर्षभस्वाशिरामर्कसप्तहैकवृषाणां* रहस्ये त्रिरुक्तस्य सामादावाद्यं वचनं यथाभद्रश्रेयादिषु *श्रेयसि ऊ-होशब्दस्य लोपः* सामादौ *जम्भोत्तरसंॅसोभाञ्जोरूपाणांॅ-

तैस्त्यंवचनं संकृतिनि स्तोभाद्यं वचनं प्रतिस्तोत्रीय मुद्भिद्बलभिदौ पूर्वस्यादौ परस्यांते भर्गस्य सामादौ स्तोभांत्यं पदं वैराजर्षभेत्वंत्यस्यांत्यवचनं यए-वापत्ययोर्यथा ग्रामे वैराजइयादिः स्तोत्रीयान्ते सर्वासु स्तोत्रीयाद्यचाक्षरेमत्स्वसंयुक्ते ॥ ९ ॥

---

सामान्तेत्यंवचनं* एतेषां साम्नां सामान्ते यत्रिरुक्तं तस्य अन्त्यं पद्वचनं तत् लुप्यते *संकृतिनि स्तोभाद्यं वचनं प्रतिस्तोत्रीयम्* संकृतिनि उद्गीथाद्यस्य त्रिरुक्तस्य प्रतिस्तोत्रीयमाद्यं वचनं लुप्यते *उद्भिद्बलभिदोः पूर्वस्यादौपरस्यान्ते* उद्भि-द्बलभिदोः पवतेहर्य तयस्तेमदयोः पूर्वस्य उद्भिदः यत् सामादौ च त्रिरुक्तं तस्यानुद्धारः परस्य च बलभिदः अंते यत्त्रिरुक्तं तस्यानुद्धारः *भर्गस्य सामादौ स्तो-भान्त्यं पदं* भर्गस्य ये स्तोभास्तेषां पदांत्ये पदांतस्तोभांतं पदं सामादौ भवति *वैराजर्षभे त्वन्त्यस्यांत्यवचनं* वैराजर्षभे तु अन्त्यस्य त्रिरुक्तस्य अन्त्यवचनं सामादौ भवति ईया ३ हा उ-पिबासोमादिषु *यएवापत्ययोर्यथाग्रामे* यां एवापत्ययोः अर्षा-सोमायां यथा ग्रामेगेयानामुक्तोन्यायः स भवति स्तोभश्च सामाद्यः सामांते यथान्यायमिति *वैराजइयादिस्तोत्रीयांते सर्वासु* महावैराजे इयादिस्तोभः स्तोत्रीयांते सर्वासु स्तोत्रीयासु भवति *स्तोत्रीयाद्ये चाक्षरेमत् स्वसंयुक्ते*एकैकस्याश्चस्तोत्रीयायाः आद्ये अक्षरे ते च स्तोत्रीयाया अन्ते मत्स्वसंयुक्ते भवतः ॥

इति अष्टमस्य नवमी कण्डिका ॥

आज्यदोहानि प्रतिलोमानि तेषामाद्यस्य सामादावाद्यं वचनम् आथर्वणदैवस्थानस्वरान्तरिक्षतौरश्रवसानामविकारः सर्वोद्धारोतोन्यत्र वैरूपे तु देवतानामनुद्धारः प्रयोगसिध्यर्थमपि हाथेडानां चैकवृषे च देवतानां निधनन्तु सामान्ते सर्वत्र पल्लघीयो।

---

*आज्यदोहानि प्रतिलोमानि* आज्यदोहानां सामाम्नायिकं क्रममुत्सृज्य प्रातिलोम्यं भवति इतिश्रुतेः अपामवर्त्तनिधनमिति आज्यदोहानां लोकनोविनियोग इति *तेषामाद्यस्य सामादावाद्यं वचनं* तेषां प्रतिलोमानां यदाद्यमृतनिधनं तस्य सामादावाद्यं वचनं भवतिच्यो३हमिति प्रसुन्वानायां *आथर्वणदेवस्थानस्वरांतरिक्षतौरश्रवसानामविकारः* आथर्वणादीनां ऊहगीतौ यथायोनि प्रयोगो भवति न कश्चिद्विकारः आथर्वणे एव स्वदक्षमादिषु दैवस्थाने परीतोष्यादिषु स्वरेषु सर्वेष्वत्र जातिवचनात। यज्ञायसुन्वानादिषु अन्तरिक्षे अभिसोमादिषु तौरश्रवसयोः प्रत्नमधसखायोदीर्घमिति *सर्वोद्धारोऽतोन्यत्र* अतोन्यत्र सर्वस्तोभोद्धारः *वैरूपे तु देवतानामनुद्धारः प्रयोगसिध्यर्थम* पञ्च निधने वैरूपे देवतानामनुद्धारः प्रयोगसिद्ध्यर्थं देवतापदं। देवतापदमिति पूर्वलक्षणेन सर्वोद्धारे प्राप्ते अपवादस्तोभाभिप्रायेण *इहाथेडानांच* इहअथाइडाएतेषां चानुद्धारः प्रयोगसिद्ध्यर्थं रेवतीपार्थुरश्मादिषु हाउरेवाएस्वादोः ३ ओ ३१२३४वा *एकवृषे च देवतानां* एकवृषे च अभिप्रवा एकवृषोमे स्वद्भूयेडत्यादियादेवतानां अनुद्धारः शाक्वरर्षभेच सामान्यात *निधनंचसामान्ते सर्वत्र पल्लघीयः* अनुद्धारप्रसक्तेनैवमुच्यते। सामान्ते यन्निधनं लघु अल्पाक्षरमित्यर्थः। यथा

गुरुषु निधनैकदेशः त्रिरुक्तानामन्त्यं वचनमृषभे तु
त्रिरुक्तं देवस्थानपूर्वयोर्निधनाद्यं पदमन्त्यायाꣳसर्वं
दिवाकीर्त्ये वैराजं भ्राड्विकर्णे ष्ठास्वरम्भासे शतमादि-
यशसि समहेत्वाद्यवचनꣳसाम्नोः पूर्वस्योपग्रहा-
द्यंपदमपाव्रतेचगवांव्रतेचकत्रान्तंप्रथममग्निव्रतेन॰

---

बृहद्रथंतरयोः स्वाशिरामर्कादिषु च *गुरुषु निधनैकदेशः* गु-
रुषु च बह्वक्षरेषु निधनैकदेशः यथोत्तरत्र वक्ष्यति *त्रिरुक्ताना-
मन्त्यंवचनं* त्रिरुक्तानां निधनानामन्त्यं वचनं । यथा आज्यदो-
हो त्रीणिधने * ऋषभेतु त्रिरुक्तं* रैवतऋषभे तु त्रिरुक्तमेव नि-
धनं भवति नान्त्य वचनं उमूउमूइति योनित्रान्निधनम् । *देवस्था
नपूर्वयोर्निधनाद्यंपदं* देवस्थानपूर्वयोः स्तोत्रीययोः निधनस्य
आद्यं पदं भवति द्यौः *अन्त्यायाꣳसर्वं* देवस्थानपूर्वयोर्निध-
नाद्यं पदं अन्त्यायां स्तोत्रीयायां सर्वं भवति *दिवाकीर्त्ये वैराज*
महादिवाकीर्त्ये आपन्तीयायां गणगीतित्वात् वैराजं भवति इका-
रोवैराजउच्यतेनिधनं *भ्राड्विकर्णे* विकर्णे आपन्त्यायामेव
भ्राड्निधनं भवति फाशया उपरि त्यद्य अन्त्यनिधनं भ्राड् भवति
*ष्ठास्वरंभासे * भासे पुरोजित्यन्त्यायां ष्ठास्वरं निधनं भवति ।
मसम्राजतृतीयेष्ठास्वरः इहौ होभद्रमपवमादिपरित्य अन्त्य निधनं
भास भवतिभासू ॥ *शतमादियशसि* हाऊ २ यशो हाऊवर्चोहा-
ऊएवमादि परित्यज्य शतं जीवेत्येवमादि निधनं भवति *समहेत्वा-
द्यवचनं *समहे तु त्रिरुक्तस्य आद्यं निधनं भवति अन्तवचने मास
इदमुच्यते यांत्रत्रतंमहतम् । *साम्नोः पूर्वस्योपग्रहाद्यं पदमपां व्रते
च गवां व्रते चकत्रान्तं प्रथमम् *प्रथमे अपांव्रते च पुनानायाव्रते कश-
ब्दान्तं यत्प्रथमंतन्निधनं भवति यआगते शिशुकइति गवांव्रते च
शब्दान्त प्रथमं निधनं भवति । *अग्निव्रतेपूर्वइका-

पूर्व ईकारोऽतिक्रान्तो वैरूपशाक्वरर्षभपूर्वयोरर्द्धेडा
सामान्तेऽध्यर्द्धा ऽश्वव्रते हौहौह्यौ हौ होन्तेषु चत्वारः
सोमा वा औहोवा तिसवा स्वर्ज्योतिः प्रथमोच्चमेकारा-
दिकृष्टमेवं पदाय स्तोभाः परासु विधासु ज्योतिर्भाः

---

रोऽतिक्रान्तः॥ अश्विनोर्व्रतपूर्वं इकारोऽतिक्रान्तो निधनो भव-
ति॥३३२ वैरूपशाक्वरर्षभपूर्वयोरर्द्धेडा॥ पञ्चनिधनवैरूपशाक्वरर्ष-
भपूर्वयोः स्तोत्रीययोः अर्द्धेडा भवति न जातमश्वरोदसीइट्॥सा-
मान्तेऽध्यर्द्धा॥ सामान्ते तु अन्त्यायां स्तोत्रीयायां अध्यर्द्धेडा भवति
इट् इडा ३३१११ इति अध्यर्द्धेडा ॥अश्वव्रते हौहौह्यौहौहोन्तेषु
चत्वारः सोमा॥ अश्वव्रते तु हौहौह्यौहौइति एतेषु होइकारान्तेष्वित्य-
र्थः। तेषु चत्वारः सोमाः स्वराः सङ्घाता भवन्ति सोमसङ्घातः प्रपुना-
नायेवेधसइति प्रथमे साम्नि होइ होइसोमायवावाउच्यारताइति॥वा-
औहोवा तिसवा॥ औहोवा विष्ये तिसवावा भवति तिसवात्पूर्वप्रत्यय-
त्वाच्च होशब्दस्य वृद्धिः॥स्वर्ज्योतिः प्रथमोच्चमेकारादिकृष्टम्॥
तिसवायाः परं स्वर्ज्योतिर्द्रव्यं प्रथमोच्चं भवति उपायपरत्वाद्वा प्रथ-
मोच्चं बृहस्य प्रथमोच्चस्य निधनभावः अन्तस्थेभ्यः छाहासीप्रथमो-
च्चानीति निधनत्वाच्च स्वारः निधनान्तः सर्वत इति। तस्य च स्व-
र्ज्योतिर्द्रव्यस्य निधनभूतस्य एकारः आदौ कृष्टो भवति ए२२ सुव-
र्ज्योती ३२३२॥एवं पदाय स्तोभाः॥ एवं होहौइ एवमाद्याः स्तो
भाः प्राक्प्रथमोच्चात् सिबात् स्वरान्ताद्भवन्ति अभिवाजीसितस्य
आदौ भवन्ति एषा तावदेका विधा समाप्ता॥परासु विधासु ज्यो-
तिर्भाः शिशुर्वाजपश्वोमेध्य इति॥ परासु विधासु किमतिदिश्यते ?
पादादौ स्तोभान् कृत्वा प्रथमोच्चस्य स्थाने द्वितीयायां विधायां
ज्योतिर्भा इति। तृतीयायां शिशुर्वाजीति। चतुर्थ्यां प्रथमोच्चस्य

शिशुर्वाऽश्वोमेध्य इति पादगीतिस्तुल्या परयो-रुद्धारः सामान्ते निधनाय स्तोभाः स्वर्वत इति नि-धनमुपग्रहादि व्याहृतिसामानि पञ्च भूर्भुवः स्वः सत्यंपुरुष इत्येतासु पृथगग्निन्दूतास्तावोमन्द्रे सो-

स्थाने अश्वोमेध्य इति *पादगीतिस्तुल्या* यथा प्रथमा पादगी-तिः पतिता पादादौ स्तोभाः प्रथमोच्चं यथोक्तम् एवंरूपाश्चतस्रो विधा भवन्ति *परयोरुद्धारः* परयोः स्तोत्रीययोः स्तोभः प्रथमोच्चान्तादुद्धारः *सामान्ते निधनाय स्तोभाः* अन्ते निधनं स्वर्वत इति तदर्थं च स्तोभाः कर्त्तव्याः प्रथमोच्चव-र्जिताः *स्वर्वत इति निधनमुपग्रहादि* स्वर्वत इति नि-धनमुपग्रहादिभिर्भवेत् एकार उपग्रहः *व्याहृतिसामानि पञ्च भूर्भुवः स्वः सत्यं पुरुष इत्येतासु पृथक्* भूरादिव्याहृ-तिषु पञ्च सामानि यथोपदिष्टानि भवन्ति। यथा भवति तथो च्यते एकैकस्यां व्याहृत्यां अभ्यस्तायां त्रिस्त्रिः पञ्च सामानि भवन्ति *अग्निदूता प्रस्तावोमंद्रे* भूःशब्दे अग्निन्दूतास्वरः प्रस्तावो भवति मन्द्रग्रहणाच्चाग्निन्दूतायामभ्युदूहं *सोमस्त्रिरु-क्तः* भूरादिष्वेव एकैकस्यामनभ्यस्तायामग्निन्दूता प्रस्तावो-भवति इत्युक्तं, इदानीं परा भक्तय उच्यन्ते पुनर्भूरित्येतस्मिन्न क्षरे सोमसङ्घातस्वरास्त्रिरुक्तोभवति सोमसङ्घातश्च पृथक् भवति *आनीकयान्तृतीयः* सोमसन्घात आनीकयां तृतीय मापद्यते हा ३२३ वाइति *स्वर्ज्योतिर्निधनमकुष्टैकारादि* भूरादीनां प्रकृतव्याहृतिसामान्ते स्वर्ज्योतिर्द्रव्यं प्रथमोच्चं भवति प्रथमोच्चत्वाच्च निधनमुपायपरत्वात् नैधनत्वाच्चान्ते स्वरः एकारः स्वरश्चास्याक्षर अकृष्ट आदौ भवति प्रथमोच्चये। *एवं सर्वेषामेव विकारविधिः*

मन्त्रिरुक्त आनीकयांतृतीयः स्वज्योतिर्निधनमकृष्टे-
कारायेवं सर्वेषामेष विकारविधि रेतेन प्रदेशेनोह्यः
सामगणः कल्पयितव्यः कल्पयितव्यः ॥ १० ॥

इत्यष्टमः प्रपाठकः ॥

अथ विकल्पा रवज्गतिर्मदमदोधनकामे पुरः
स्वासूत्तरयोश्चारङ्गमानदे ऽष्टेडरयिष्ठयोर्हिन्वनादीदि-

---

एवं सर्वेषामामहीयवादीनां साम्नां एष विकारविधिरुक्तः
प्रत्येतव्यः। *एतेन प्रदेशेनोह्यः सामगणः कल्पयितव्यः कल्प-
यितव्यः* एतेन लक्षणप्रदेशेन ऊह्यः प्रयोगः कल्पयितव्यः
कल्पयितुं शक्यत इति ॥

इति अष्टमस्य दशमी कण्डिका।

इति उपाध्यायाजातशत्रुपादैर्विष्णुयशःशिष्याय अनुचरणार्थं
भाष्यं कृतमिति* ॥

भावाः परिसमाप्ताः इदानीं विकल्पा उच्यन्ते भावशेषं च,
एकस्मिन् पादे द्विधा गीतिर्दृश्यते, तत्र किमुभयप्रकारस्यापि
गानस्य युगपत्प्रयोगो भवति ! उतान्यतरस्येतिसंशयः। प्रयोगा-
र्थत्वादूहस्य तन्निर्णयार्थमिदमारभ्यते *अथविकल्पाः* वक्ष्यन्-
त इति वाक्यशेषः। *रवज्गतिः* तरणिरित्तिसायां रौरवे-
नेमिन्तष्टेवसा २ उहा ३३२ यिविकल्पेनान्यतरस्य प्रयोगः
*मदमदोधनकामे* पवस्वदक्षसायां निधनकामे मदहो इमदा
होइप्रतिस्तोत्रीयमन्यतरस्य प्रयोगो भवति। *पुरःस्वासूत्तरयो-
श्चारङ्गमानदे* पुरोजित्यां नामदे स्वासु चोत्तरयोः स्तोत्रीययोः
अरङ्गमा विकल्प्यते अरङ्गमायजइत्येतत्। *अष्टेडरयिष्ठयोर्हि-
न्वनादीदिहिस्वराः* पवस्ववाजसातयतृतीयायां अष्टेडरयिष्ठयोः

हिस्वरा मातावृद्ध॑ंश्वामित्रे क्रौंचमषष्ठन्नवमात्रं दीर्घेपरयोर्दोषापरन्नीचै गैवतृतीयदशमं कृष्ट॑ं सर्व-त्र धर्मविधर्मणोः पञ्चाक्षरशोधनानि स्तावे हविष उत्तरयोः प्रथमे विराट्पर्यूच देव्येगीथस्तदादि नवे-निहोता तिधातुवारा त्वेसोदैर्घे गकारः शनेराजन्प्लु-

---

षवमानमहिष्वनेति दीर्दिहिस्वरा गीतिर्विकल्प्यते *मातावृ-द्ध॑ श्वामित्रे* असाविसोम इन्द्रतृतीयायां यज्ञायज्ञीयर्क्षु तृती-यायां च महावैश्वामित्रे माशब्दताशब्दयोर्यद्वृद्धं गानं त-द्विकल्पते । यज्ञंचमाउतत्राताइति च *क्रौंचमषष्ठं नवमात्रम्* गायत्रीक्रौञ्चे प्रतिस्तोत्रीयं मध्यमे पादे षष्ठमक्षरं विकल्प-ते *दीर्घे परयोर्दोषा परं नीचैः* समुद्रीर्घे परयोः दोषायाः परमक्षरं नीचीभवति *गवतृतीयदशमंकृष्ट॑ सर्वत्र* गौगवे तृतीये पादे दशमं कृष्यते *धर्मविधर्मणोः पंचाक्षरशोधनानि* पंचाक्षरशः निधनानि भवन्ति दशाक्षराणि विकल्पेनाम्नानानि *स्तावे हविष उत्तरयोः प्रथमे* सौहविष उत्तरयोः स्तोत्री-ययोः प्रस्तावे प्रथमे स्वरे विकल्पः परि प्रधन्वोत्तरयोः पवा-प ३ वा आईवा ३ इन्द्रः पे ३ आ ३ इन्द्रा ३ *विराट्पर्यू च देव्ये गीथस्तदादि* आग्निन्नरः इति पर्यूष्वायां च वा-मदेव्ये उद्गीथाद्यं पर्व प्रथमे स्वरोविकल्पते *नवे निहोता* पूर्वे मानवे निहोता विकल्पते अभिसोमादिषु *तिधातु-तुवारा* मन्द्रयायेत्यत्र वारा विकल्पते । *त्वेसोदैर्घे* गकारः त्वेसोमायां दैर्घश्रवसे वृगोहेतिगकारोविकल्प्यते *शनेराज-न्प्लुवते* इमोराजन्नौशने राजन् शब्दोविकल्पेन प्लुवते ।

वत आसोफतृतीयायामृतेनयोनिवन्मध्येजाप्लुतं प्रान्त्ययोर्वलोपश्चाद्यउच्चैस्तकारो यजिवाह इहायांप्लवते यशस्युत्तरयोरग्निदूतास्ताव एवबृहत्युदा आ इति गीतिः षभेकाम्पा त्वंनोवारे पुनाणवबृहति प्रसोण्वतरेपुनाभिसोजंभेचोत्तरयोः ककुभोर्विकल्पाः ॥ १ ॥

---

*आसोफतृतीयायामृतेनयोनिवन्मध्येजाप्लुतं प्रान्त्ययोर्वलोपश्चाद्यः उच्चैस्तकारः* आसोफतृतीयायां सफेऋतेन इति एतस्मिन्पादे वाशब्दः योनिवद्भवति मध्यमे विकल्पे प्रथमांत्ययोर्विकल्पयोः जाशब्द एव प्लुतोभवति यकारलोपश्च तयोरेव आद्ये विकल्पे उच्चैस्तकारः *यजिवाहइहायांप्लवते* यजिष्ठंत्वायावैष्णवाहे इहायां प्रत्यये प्लवते *यशस्युत्तरयोरग्निदूतास्तावे* इन्द्रस्य यशसि उत्तरयोः स्तोत्रीययोः प्रस्तावे अग्निदूता विकल्पते *कण्वबृहत्युदाआइतिगतिः* त्वंह्यहित्वेरवायां कण्वबृहति उदाआइन्द्रोत गीतिर्विकल्पते *षभेकांपा* श्रुधीहवायां वैराजर्षभे मारेअस्मन्मघवन्नित्यत्र कांपास्वरोविकल्पते *त्वंनोवारे पुनाणवबृहति प्रसोण्वतरे पुनाभिसोजंभेचोत्तरयोः ककुभोर्विकल्पाः* त्वंनश्चित्रायां वारवंतीये, पुनानायां कण्वबृहति प्रसोमदेववीतयायां कण्वरथंतरेषु पुनानायामभिसोमायां च वार्कजंभे च उत्तरयोः स्तोत्रीययोः ककुभोर्विकल्पाः ककुभोबृहत्यौ वा ॥

॥ इति पुष्पसूत्रभाष्ये नवमस्य प्रथमा कण्डिका ॥

अथ भावान्प्रवक्ष्यामः प्रगाणं यैर्विधीयते ।
आर्चिकं स्तौभिकं चैव पदं विक्रियते तु यैः ॥ १ ॥
आयित्वं प्रकृतिं चैव वृद्धश्चावृद्धमेव च ।
गतागतश्च स्तोभानामुच्चनीचं तथैव च ॥ २ ॥
सन्धिवत्पदवद्गानमत्वमाभावमेव च ।
प्रश्लेषाश्चाथ विश्लेषाऊहे त्वेवं निबोधत ॥ ३ ॥
संकृष्टश्च विकृष्टश्च व्यञ्जनं लुप्तमनिकृतम् ।
आभावांश्च विकारांश्च भावानूहेऽभिलक्षयेत् ॥ ४ ॥
एतैर्भावैस्तु गायन्ति सर्वाः शाखाः पृथक्पृथक् ।
पञ्चस्वेव तु गायन्ति भूयिष्ठानि स्वरेषु तु ॥ ५ ॥

---

*अथ भावान्प्रवक्ष्यामः* अथशब्द आनन्तर्यार्थे भावान् प्रवक्ष्यामः *प्रगाणं यैर्विधीयते* । गानमेव प्रगाणं त्रिधीयते प्रतिष्ठाप्यन्त इत्यर्थः ॥

*आर्चिकं स्तोभिकं चैव पदं विक्रियते तु यैः* ॥ १ ॥ आर्चिकं पदं स्तौभिकं च विक्रियते । येविकारमापद्यन्ते तान्प्रवक्ष्यामः

*आयित्वं प्रकृतिं चैव वृद्धं चावृद्धमेव च ।
गतागतं च स्तोभानामुच्चनीचं तथैव च ॥ २ ॥
संधिवत्पदवद्गानमत्वमाभावमेव च ।
प्रश्लेषाश्चाथ विश्लेषा ऊहे त्वेवं निबोधत ॥ ३ ॥
संकृष्टं च विकृष्टं च व्यञ्जनं लुप्तमतिकृतम् ।
आभावांश्च विकारांश्च भावानूहेऽभिलक्षयेत ॥ ४ ॥
एतैर्भावैस्तु गायन्ति सर्वाः शाखाः पृथक्पृथक् ॥
पञ्चस्वेव तु गायन्ति भूयिष्ठानि स्वरेषु तु ॥ ५ ॥

सामानि षट्सु चान्यानि सप्तसु द्वे तु कौथुमाः ।
ऊनानामन्यथागीतिः पादानामधिकाश्च ये ॥ ६ ॥
योनिदृष्टाः समा येऽन्ये पादास्त्वक्षरशः समाः ।
आयेभावश्च नेदानीं दीर्घं यच्चैव कृष्यते ॥ ७ ॥
कर्षणे तु निवर्त्तेते त्सायिबायामुपद्रवे ।
उभावोदृश्यतेसाम्न्योभावश्च यथाक्रमम् ॥ ८ ॥

---

*सामानि षट्सु चान्यानि* षट्सु गीयंतेप्रथमादिष्वेव । *सप्तसु द्वे तु कौथुमाः* सप्तसु स्वरेषु द्वेसामनी गीयेते कौथुमशाखिनां प्रोष्ठुत्वावाकाद्यत्र ॥

*ऊनानामन्यथा गीतिः पादानामधिकाश्च ये* ॥६॥ योनिपरिमाणादूनानां पदानां अक्षरपरिमाणादूनानामित्यर्थः । पादानामन्यथा गीतिर्भवति । यथाएष ब्रह्मादिषु । योनिपरिमाणादधिकाश्च ये तेषां चान्यथा गीतिर्भवति । यथा विराड्वामदेव्यादिषु ।

*योनिदृष्टाः समा येऽन्ये पादास्त्वक्षरशः स्मृताः* ।
पादास्तु येन्येक्षरसमानतः समाः स्मृताः ते योनिवद् दृष्टा भवन्ति॥

*आयेभावश्चनेदानीं दीर्घं यच्चैव कृष्यते*आयेभावो नभवत्यूहगीतौ श्यैतादिषु । दीर्घकर्षणं च न भवति । किं तर्हि ? वृद्धकर्षणं भवति यथा आर्कोदिवानामित्यत्र ॥

*कर्षणे तु निवर्त्तेते त्सायिबायामुपद्रवे* ।

त्सायिबायां प्रत्यये उपद्रवे भक्तिविषये कर्षणे उद्देशोऽपि निवर्त्तते ऊहगीतौ समेष्वपि पादेषु ।

*ओभावोदृश्यते साम्न्योभावश्च यथाक्रमम्* । ओभावोदृश्यते साम्नि यत्र ओभावश्च दृश्यते । यथाक्रमं लक्षणन्यायेन य-

अभ्युदूहेन सर्वत्रोहगीती रहस्यवत् ।
स्वादिपर्वणि तिस्रायां तथैवान्येषु सामसु ॥ ९ ॥
आर्चिकं निधनन्याये स्तौभिकं वा यदक्षरम् ।
कृष्टाकृष्टं भवेत्स्वार्यमन्तोदात्तं वृधे स्वरम् ॥१०॥
मणाजनꣳसद्योनामाविशासिविदेप्सुजित् ।
स्वनाद्युꣳशियेतिर्भारयि प्रियमभिह्विता ॥ ११ ॥
जसावसन्तमधर्मत्सुत उक्थ्यःषिभिर्दूयन् ।
न्यायादेतान्यपेतानि श्वत एके वृधे स्वरम् ॥१२॥
अभिासपौष्कलाष्टेडरयिष्ठाछिद्रधर्मसु ।
ऐताश्वव्रतशौक्तान्धचितुः षाडिडयोस्तथा ॥ १३ ॥

---

यायथा प्राप्तिः तयोस्तथातथा तौ भवतः । ऊहगीतावपि ।

*अभ्युदूहेन सर्वत्र उहगीती रहस्यवत्* । अभ्युदूहेन सर्वत्र ऊहगीतिः प्रत्येतव्यः । यथा रहस्ये तद्वत् ॥

*स्वादिपर्वणि तिस्रायां तथैवान्येषु सामसु ।

*यथा स्वादिपर्वणि तिस्रायां अभ्युदूहोभवति । रहस्यवता तथाऽन्येष्वपि सामसु यथा सहिते । उदाहरणं तिस्रोवाचउत् ।
आर्चिकं निधनं न्याये स्तौभिकं वा यदक्षरम् ।

कृष्टाकृष्टं भवेत् स्वार्यमन्तोदात्तं वृधे स्वरम् ।

*आर्चिकं निधनं यत्र स्तौभिकं वा तयोर्यदन्त्यमक्षरं तत् कृष्टमकृष्टं वा भवेत् । स्वार्थं प्रथमस्वरस्य कृष्टं स्वार्यं भवति । प्रथमायातृतीयस्वरान्ते चेति । द्वितीयस्वरस्थस्य अकृष्टं भवति । तृतीयादिप्रत्युत्क्रमं कृत्वा अन्तोदात्तं वृद्धे स्वरं भवति । कुतः ! न्याये योनिगाने योनावेवं दृष्टत्वात् । *मणाजनꣳसद्योनामाविशासि विदेप्सुजित् । स्वनाद्युनꣳश्रियेति-

ember 1930.

THE

# [C]HOWKHAMBĀ SANSKṚIT SERIES,

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 393

# पुष्पसूत्रं

सा म प्रा ति सा ख्यं

पुष्पर्षिप्रणीतम्

श्रीमदजातशत्रुकृतभाष्यसहितम् ।

काशीस्थद्राविडोपाह्व म० म० पण्डितश्रीलक्ष्मणशास्त्रिणा

संशोधितं विजयते ।

FASCICULUS III-३.

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT SERIES OFFICE.

*Vidya Vilas Press, North of Gopal Mandir, Benares.*

1929.

षड्भासे पौष्कले सप्त त्रीन् षष्टेडे पृथक्तृचे।
रयिशौक्तेवृषास्तोभे द्वेद्वेन्यायविरोधिनी॥

भारयिंप्रियमभिद्विता। जसात्वसन्तमन्धर्मप्र त्सुतउद्यः षिभि-धयन्। न्यायादेतान्यपेतानि*। मणादीनि एतस्मान्न्यायादपे-तानि भवन्ति। मणाजनं सद्योनापवस्वदेवाद्यान्त्ययोः। सद्योनां स्वादिष्ठोत्तरयोः। आत्विश पवस्वदेवमध्यमायां असि यस्तेमदमध्यमायां एतानि गायत्रीभासे। त्रिदेष्वुजित्। इन्द्रमच्छोत्तरयोः। पौष्कले। पवस्ववाजोत्तमायाम्। इष्टेडरायिष्ठ-योः। द्वयुङ्गोमन्तोत्तमायाम्। पौष्कलत्रैतयोः श्रियेसखाय आद्या-याम्। पौष्कलेतिभाः ज्योतिर्भाः अश्वव्राते रयिंउपशिक्षायाम्। पौष्कलेप्रियम्। प्रासोमध्यमायांपौष्कलत्रैतयोः। अभि अनुहि-त्वाश्वान्धीगत्रे। द्विता प्राणाप्रथमायाम् पौष्कलत्रैतयोः। जसा तयोः पवित्रायां षाडिडो वसन्तमंसखान्त्ययोः शौक्तपौष्कलयोः। धर्म दिवोधर्त्तायां धर्माणि। सुतः पवस्ववाजसातायां रयिष्ठेतु। उद्यः अभिसोमाध्यास्थायां आछिद्रे। षिभिः धयन्। वृषामा-द्यान्सयोः चतुरिडे। पूर्वस्माल्लक्षणन्यायात् एतान्यनेन गतल-क्षणानि भवंति। विपरीतानीत्यर्थः *श्वाएं कृवृधे स्वरम्* धिया-नोवाजांउपमाहिशश्वतः अष्टेडतृतीयायां एके वृधे स्वरं मन्यन्ते।

*त्रीभासपौष्कलाष्टेडरायिष्ठाछिद्रधर्म्मसु।
त्रैताश्वव्रतशौक्तान्धीचतुःषाडडयोस्तथा॥
षड्भासेपौष्कले सप्त त्रीन्षष्टेड पृथक्तृचे।
रयिशौक्ते वृषास्तोभे द्वेद्वे न्यायाविरोधिनी॥
अश्वांधीगतयोस्तोभधर्माच्छिद्रेषु पञ्चसु*
एतेष्वेव सामस्वेतेषां शब्दानामपवादः॥

इति पुष्पसूत्रभाष्ये नवमस्य द्वितीया कण्डिका।

अश्वान्धीगवयोस्तोभधर्माच्छिद्रेषुपश्वसु ॥ २ ॥

तृतीयोच्चान्त्यं हि स्तोभे दीर्घी भवति न वाम्रे स्पर्शान्तं व्यञ्च कौत्से चेकारोकारौ नश्चाध्वर्यवमध्यमायां सन इन्द्रायां क्षौद्रेच कृतेचापदान्तोत्रिशीयेच पूर्वेशूष त्रिणिधने चायास्ये सधेषिणोदनः का-

---

*तृतीयोच्चान्त्यं हि स्तोभे दीर्घी भवति *तृतीयोच्चान्त्यमक्षरं ह्रस्वं हकारे स्तोभे प्रत्यये दीर्घीभवति । द्विमात्रं भवतीत्यर्थः । यथाऐडक्रौंचवाम्रादिषु *नवाम्रे स्पर्शान्तं व्यंच* उत्सर्गप्राप्तस्यापवादः । वाम्रे स्पर्शान्तमक्षरं तालव्यं च न दीर्घीभवति यथा राजदेवकृतं अदब्धः सुरभि च *कौत्से चेकारोकारौ* कौत्से च इकारउकारौ हि स्तोभे प्रत्ययेन दीर्घीभवतः यथा स्वादीहिष्टासमूहिपीइति *नश्च* कौत्से नशब्दश्च दीर्घीभवति । सनाहीन्द्रेति *अध्वर्यवमध्यमायां* अध्वर्यो अद्रिभिरितमार्गीयवमध्यमायां हि स्तोभे प्रत्यये दीर्घीभवति यथाहा अहोपि मा ३ ना ३ *सन इन्द्रायाम* सनइन्द्रेति मार्गीयवे हि स्तोभे प्रत्यये दीर्घीभवति, यथाह अहोयिवो ३ वीन् । *क्षौद्रे च* क्षौद्रे च मार्गीयवे रसौ होवेत्यत्र हि स्तोभेभवति । *कृते चापदान्तः* हात्रिष्कृते च अपदान्तो दीर्घी भवति हिस्तोभे प्रत्यये स्वादित्यादिषु *त्रिशीये च पूर्वेशूष* त्रिशोत्रिशीये च पूर्वे हि स्तोभे प्रत्यये दीर्घीभवति अपदान्तः । हिन्वहुंनायिसू अशूष स्तुषेशूष इत्यत्र प्रतिषेधः *त्रिणिधने चायास्ये* त्रिणिधने चायास्ये स्तोभे प्रत्यये दीर्घीभवति । अपदान्तएव । उत्सोदेवोहिराहाउहोवा *उत्सेधेषिणोदनः* उत्सेधे षिणोदनइति च एतौ शब्दौ हिस्तोभप्रत्यये दीर्घीभवतः । अग्निसोमायां श्रीमन्त

मे च प्रथमकल्पे सौमे स्तावे कार्ते च पर्याश्विनोर्व्रतोत्तरे शंकुन्येकार ऋषभे च शाक्करे संमील्ये लघुविनते ऽत्वे कालेये प्रत्नामहीयत्वे च क्रौञ्चाभिनिधनसप्तहपय उत्तर-धर्तोद्वत्रासदस्यवेपुर्वृण्यादिर्जितेश्चे पूर्वेऽसंयोगे मपो-

---

इत्यत्र *कामे च प्रथमकल्पे* सर्वासु पवस्वदायां निधन-कामे प्रथमे विकल्पे दीर्घीभवति हिस्तोभे प्रत्यये सर्वासु स्तो-त्रीयासु *सौमेस्तावे* सौमेये प्रस्तावे दीर्घीभवति । हि स्तोभे प्रत्यये योगेयोगेतवाहाउस्ता ३ रा ३ *कार्ते च परि*-कार्त्तयशे च परिस्वस्थानो अक्षर इत्यत्र हि स्तोभे प्रत्यये दीर्घी-भवति *अश्विनोर्व्रतोत्तरे* उत्तरे अश्विनोर्व्रते हि स्तोभे प्रत्यये दीर्घीभवति *शंकुन्येकारे* शंकुनि च एकारे प्रत्यये दीर्घी-भवति । पवस्वमापधुना *ऋषभे च शाक्करे* शाकरर्षभे च एकारे प्रत्यये दीर्घीभवति पवाएस्व वा एजसाएनयआ *संमील्येल-घुविनते* संमील्ये लघ्वक्षरं विनते प्रत्यये दीर्घीभवतिसंमील्येपुरो-जितीत्यत्र *अत्वेकालेये*कालेय अत्वभावविषये अक्षरे प्रत्यये दीर्घी भवति । कालेयेयस्यायं विश्वाअर्गाः *प्रत्नामहीयवे च* प्रत्नंपीयूषेत्यत्र आमहीयवे अत्वभावविषये एव प्रत्यये दीर्घीभ-वति । दिवाअनार्याः *क्रौंचाभिनिधनसप्तहपयउत्तरधर्त्तोद्वत्रा-सदस्यवेपुर्वृण्यादिः* एतेषां वृणादिर्दीर्घीभवति । क्रौञ्चे अयं-पूषौ हो ३ रयिर्भगाः । आमन्द्रैरभिनिधने । पुनानः सोमसप्तहे । पयस्युत्तरयोः वृणीमहात्रोदाहरणम् । धर्त्तोद्वद्धार्गवे । पुरो-जित्यांत्रासदस्यवे, तत्रोदाहरणं *जिनोश्चपूर्वेऽसंयोगे* पूर्वे वाजजिति वृण्वादि दीर्घीभवति । असंयोगे प्रत्यये मृज्यमानायां पवमानः मर्यादेवानां सोमेत्यत्र दीर्घीभावप्रतिषेधः *उत्तरे-

त्तरेस्तोभे क्रौंचेत्वसंयोगे नात्रावितेनेमिः कौत्से च हि शब्दः प्रवद्भार्गवे कुष्टादस्थादकारः स्वारे च पर्णे हाराद्योनौ त्वश्ह्यङ्गप्रथमायां च द्वितीयश्सन्तः सन्तः षञ्जनित्रेरथन्तरवृषाश्विनोर्व्रतेष्वोस्तोभे दैर्घे व्रात्योत्तर-

---

स्तोभे* उत्तरे वाजजिति स्तोभे प्रत्यये योवृणीमहालस्याआदिर्दीर्घोभवति । सूर्यस्येवारश्मयोद्राययित्नावाः ३ होवाहोयि *क्रौंचे त्वसंयोगे* क्रौंश्चेषु असंयोगे प्रत्यये दीर्घोभवति । संयोगःप्रतिषिध्यते । यथासूरामोनौहोदर्शनामाः *नात्रावितेनेमिः* अत्रावितेनेमिरेषामित्यत्र प्रतिषेधः । असंयोगेऽपि प्रत्यये *कौत्से च हिशब्दः* कौत्से चहि शब्दोदीर्घोभवति असंयोगे प्रत्यये । अभीहीनो ३ *प्रवद्भार्गवेकुष्टादस्थाद्रकारः* प्रवद्भार्गवेकुष्टादस्थादकारो दीर्घो भवति शुचि बन्धुपावकाः *स्वारे च पर्णे हाराद्योनौ* स्वारे च सौपर्णे प्रतिहारात्परमक्षरं दीर्घो भवति, द्वितीयश्संतयोनौ । अस्ताहाउवा रामा उ वा रामा इति *त्वश्ह्यङ्गप्रतिमायां च* प्रतिहारात्परमक्षरं दीर्घोभवति *द्वितीयश्सन्तः* उच्चास्वारसौपर्णे तृतीयायामुपायद्वितीयमक्षरं दीर्घो भवति सा इषा उवा सान्ता *षंजनित्रे* उत्तरे जनित्रे षशब्दो-दीर्घोभवति पुरोजि तृतीयायां *रथन्तरवृषाश्विनोर्व्रतेष्वोस्तोभे* एतेषां साम्नां ओस्तोभेप्रत्ययेदीर्घोभवति । वायिश्वद्रतां । आमानर्ताओवा । अभाओवा । अपो वासानो अर्षसाना अर्षसा ३४ *दैर्घे व्रात्योत्तरयोश्च *त्वेसोदैर्घे उत्तरयोः स्तोत्रीययोः उद्गीथओस्तोभेप्रत्ययेदीर्घोभवति *थेलांदतीययोक्तेष्वौकारे* इलान्दवारवन्तीययोक्ताश्वेषु अकारेप्रत्ययेदीर्घोभवति । पुत्रा अहोहोहाई । सा अहो हाई । मा ३ त्मा ३ युजा अहो ३ हो ३ हा

योश्च थेलान्दतीययोक्तेष्वौकारे स्तावाद्यं कण्वतरेवैय-नेकृष्टवृद्धयोर्मध्ये रैवते च वृण्यादिः साहीये शताया-स्तत्वा त्सप्रेद्विःतीयान्तः सूर्यस्य अभिसोमाद्यायामा-द्यस्यान्त्यं बोधीये मघोनामेके देव्येदीधिन्ववावितदे-व्ययोः त्स्यशब्दः स्वरयोः कुभेदभेदः श्येनेन इरी-दीर्घत्वम् ॥ ३ ॥

---

१३ । वाजा २ *स्तावाद्यंकण्वतरे* प्रस्तावाद्यमक्षरं कण्वरथन्त-रेदीर्घोभवति परीतोषिंचतासुनामित्येवमादिषु *वैयनेकृष्टवृद्धयोर्म-ध्ये* वैयने सोमसाम्नि कृष्टवृद्धयो रक्षरयोर्मध्ये यदक्षरं तद्दीर्घो-भवति, यथा पुरोजित्तो सुतायामादा इन्नवे *रैवते च वृण्यादिः* रैवतर्षभे च वृण्यादिर्दीर्घोभवति जुहुमसाई । द्याविद्यवाइ *सा-हीयेशतायास्तत्वा* सत्रासाहीये त्वाशब्दस्य शतायाः परस्ताद्य-दक्षरं तद्दीर्घोभवति । अमातात्वा *त्सप्रेद्विःतीयान्तः :सूर्यस्य* वात्सप्रे द्वितीयान्तोदीर्घोभवति जनितासूर्यस्य *अभिसोमायामा-द्यस्यान्त्यम्* वाम्रे अभिसोमायां आद्यस्य पादस्यान्त्यमक्षरं दीर्घोभवति *बोधीयेमघोनामेके* स्वादिष्ठायां तृतीयायां जरा-बोधीये मकारस्य एके दीर्घभावं मन्यन्ते *देव्येदीधि* विराड्वा मदेव्ये धिशब्दोदीर्घोभवति अग्निनरायां *त्वं नोवितदेव्ययोः* पर्यूष्वग्रायां । गौरीवितवामदेव्ययोः त्वशब्दोदीर्घो भवति *त्स्य शब्दः स्वरयोः* । स्वरसाम्नोः मत्स्यपायितमेहइसवत्स्यशब्दो दीर्घोभवति *कुभेदभेदयः* त्रैककुभेदशब्दोदीर्घोभवति । य-एक इद्विदाया ३ ताइ *श्येनेन इदीर्घत्वं* गोविष्ठोने तृतीयायां गशब्दोदीर्घोभवति ॥

दीर्घत्वं दीर्घभावशेषं परिसमाप्तम् ॥

इति पुष्पसूत्रभाष्ये नवमस्य तृतीया कण्डिका ।

शाक्त्येहीष्यन्तोवृद्धो शत ध्रुवे वारान्तोषतयश्च दन्वतेचाविप्रोह्यायस्तावत्स्वरान्तो नगशशूपधास्यन्ते च त्वाष्ट्री साम्निहारादिर्योनो नव पूर्वपज्ञरुणसामशोकपृश्निषु च नोदेदिरिक्त शब्दा अरिष्टे च ये वी इत्येनौ शब्दौ समुद्रछन्दसि चोतायां द्वितीयस्थामेरपविराजस्तावाद्रेष्णादिरवृद्धः संक्षारवैश्वज्यौतिष गो-

*शाक्त्यहीष्यंतोवृद्धः* शाक्त्ये हीष्या अन्तोवर्द्धते । या ३ मा ३ दा ३ नां ३ *अशत* शतशब्दस्यापवादः । तुवां ३ गव्यूः अ ३ हा ३ इशा ३ त *ध्रुवेवारान्तः* ध्रुवेवारान्तायाः सर्वत्रांतोवर्द्धते *अषतयशच* अकारः प्रतिषेधार्थः । ह्रः पा ३ रा ३ इभूषा ३२३ ताश्चाया ३ इयावारुणाया ३ श ता३मां *दन्वते चाविप्रः* वैदन्वते च सर्वत्र निहोताया अन्तो वर्द्धते *अविप्रः* त्वंविप्रइत्यत्रापवादः *बृहतिस्तावात स्वरान्तः* बृहति प्रस्तावात्परस्य पर्वणः सर्वत्रान्तोवर्द्धते *नगशूपधा* एतेषामपवादः । मत्स्यबृहत्युत्तरयोः । यज्ञाबृहति तृतीयायां सुताबृहति तृतीयायां च *स्यन्ते च त्वाष्ट्रीसाम्निहारादिर्योनौ* स्यन्तरे त्वाष्ट्रीसाम्नि योनौ प्रतिहारादिर्वर्द्धते *नवपूर्वपरुज्ज्वणसामशोकपृश्निषु च नोदेदिरिक्तेशब्दाः* पूर्वमानवपज्ज्ववरुणसामश्रेशोके पृश्निषु च योनौ देदिरिक्त एतेशब्दा वृद्धा भवन्ति यथाक्रमेण *अरिष्टे चयेवीइत्येतौ शब्दौ* अरिष्टे च येशब्दवीशब्दौ योनावेव वर्द्धेते *समुद्रछन्दसिचोतायां द्वितीयस्थम्* अग्ने तव श्रवोतायां द्वितीयस्यां समुद्रच्छन्दसि च साम्नि चोतायां द्वितीयस्वरस्थमक्षरं वर्द्धते *अर* रारशब्दस्य अपवादः इरज्यन्नग्ने *पविराजेस्तावाद्रेष्णादिरवृद्धः* पवित्रंतायां सामराजे प्रस्तावात्परस्य पर्वणः

रांगिरसेषु नियान्तोदेऽश्वते ऽग्नेद्विस्तेजयेत्त्रिणिध-
नसाममिक्षेषु च थे सार्वादिरदेवः सिष्ठे तद्विविद्धाया
अन्तोयोनौ रुणसाम्नि च रूपदोविशीयाष्टेडेषूर्मिणोद्भा-
वोजम्भे च तृतीयो दादिर्नित्रे च पूर्वे देविशीये

---

गेष्ण आदिर्न वर्द्धते। मंत्रेत्वेवितनत्रा *संक्षारवैश्वज्योतिषगौरां-
गिरसेषु नियान्तः* इडानांऽसंक्षारे वैश्वज्योतिष गौरांगिरसेषु च
नियांतः अवृद्धो भवति। सर्वत्राधिकारान्नियामचित्रामृजनाइति।
निया २ मंची ३ ३ त्रा ३ ३ मृजंता ३ इ। अन्तोनवर्द्धते *अदेऽय-
वे* देशब्दस्यवेशब्दौवर्द्धतेदिविसदृभूमियाददा इति। सनइन्द्रा-
यायज्यवाई। वैश्वज्योतिषचपूर्वत्रान्नियांतोवर्द्धते *ऽग्नेद्विः* ऽग्ने-
शब्दाद्विशब्दौ वर्द्धते एव अक्रांनित्यत्र वृषापवित्रः अधिसाक्रोअ-
ऽय ३२ ना ३ द्व १ हस्त्रो २। मात्रावृसुचानोअद्रा ६। नो २
आ २ द्रा ३ तु ३ *तेजयत्रिणिधनसामिक्षेषु च थेसार्वादिर-
देवः* अयोनौतेशब्दो वर्द्धते धिगोजिन्वतिसत्पते* सिष्ठेतद्वि-
विद्धायां अन्तेयोनौ* वयमेनेमिदेत्यत्र वासिष्ठे तद्विविद्धायाम-
न्तोवर्द्धते। योनौतस्मा ३ नु १ घ १ स १ व १ ना इ
*रुणसाम्नि च* घृतवत्यां वरुणसाम्नि योनौ तद्विविद्धाया
अन्तोवर्द्धते। योद्या २ वा २ पृथिवी ३ वरुणा ३ ऊहगीलौ-
नवर्द्धते। तद्विविद्धान्तः *रूपदो विशीयाष्टेडे षूर्मिणोद्भा-
वः* वैरूपसदोविशीयेअष्टेइत्येतेषु ऊर्मिणाशब्दस्य उच्चीभावः।
अभिसोमाद्वितीयायां वैरूपसदोविशीययोः स्वासु अष्टेडेतृतीयायां
च तरत समुद्रंपवमानऊ२र्मिणा २ सदोविशीयेष्वेवं। अष्टेऽइन्द्र-
स्य सो २ मपवमानऊ २ र्मिणा ईडा *जंभे च तृतीयोर्दादिः*
वार्कजंभे च तृतीयपादादिरुच्चीभवति। अभिसोमादिषु। समुद्र-

हारादिरस्थाः शृङ्गे कौत्से वेसूष्वा चतुर्थमेकोनामन्ते राधाया अन्त्यानि वर्द्धन्ते स्पत्योत्तरयोश्चातिरोवत्यां योनिवदाद्यायामन्त्ये सर्वासु घृतनिधनाद्यं च शूवत्यां मन्तवद्दान्त्येहोपरे द्वेशाविवोनायामाद्यंसकर्षाद्धि-

---

स्या २ धिविष्टपा ३ इयो नोनीचीत्वादुहगीतौउच्चीभावः *नित्रे च पूर्वे* पूर्वे च जनित्रे तृतीयपादादिरुच्चीभवति *दो-विशीयेहारादिः* सदोविशीये प्रतिहारादिरुच्चीभवति पश-माज्या *अस्था* अपपादमायां सदोविशीये स्थाशब्दोनोच्ची-भवति । स्थावा *शृङ्गेच* हारादिरुच्चीभवति ऊहाविषये *कौत्सेवेसूष्वाचतुर्थमेकोनाम्* ऐडकौत्से प्रस्ताविषये सूष्वा-चतुर्थस्वरं भवत्येकाक्षरोना *अन्तेराधायाअन्त्यानिवर्द्धन्ते* स-मन्ते वसोराधायां अन्त्यानि त्रीण्यक्षराणि वर्द्धन्ते नऊताव-सोराधास्य साईदासा *स्पत्यौत्तरयोश्च* दासस्पत्यउत्तरयोःस्तो-त्रीययोर्वसोराधाया अन्त्यानि त्रीण्यक्षराणि वर्द्धन्ते *तिरोवसांयो-निवत्* तिरोशब्दवत्यां वसोराधायां योनिवद्वृद्धावृद्धं भवति *आ-द्यायामन्त्ये सर्वासु* आद्यायां च वसोराधायां अन्त्ये द्वे अक्षरे ते सर्वासु स्तोत्रीयासु *घृतनिधनाद्यायां च* घृतनिधनाद्यायां च स्तोत्रीयायां किं ? अधिकारादाद्यायां वसोराधायां अन्ते द्वे अक्षरे वर्द्धेते *शूवत्यांमन्तवत्* सूशब्दवत्यां वसोराधायामन्तवदन्त्यानि त्रीण्यक्षराणि वर्द्धन्ते *दान्त्येहोपरे* पादान्ते अक्षरे होशब्द परेमत्येयेद्वे अक्षरे वर्द्धेते ।*द्वेशाविवा*अपदान्तीयेपि विवाशाशद्वौ होशब्दपरेप्रत्यये अक्षरे परे वर्द्धेते ग्रहणात् *ऊनायामाद्यंसङ्कर्षा-त्* ऊनायां वसोराधायां आद्यमक्षरं वर्द्धते सङ्कर्षाद्धेतोः प्रवद्धन्द्व आइऊ *द्वितीयमन्यस्यां* उक्तलक्षणायां अन्यस्यां वसोराधायां

तीयमन्मस्यां वारे च नो राहेनो तृतीये देवृधन्तात-रुतां॑श्रीवासिष्ठ उतद्विषापतिः कवीमयं दासोत्तरयो स्तृतीयोच्चाच्छतोत्पत्तिः ष्कले जास्वर उपशिक्षायां प्राक्प्रहूयसायाः क्रेष्वायास्ये पुनान इत्यत्र सोमं॑सो-दवृद्धोध्यैचेन्द्रमच्छायां व्यक्षरायामादिर्मीढेमोच्चं नीचं

---

द्वितीयमक्षरं वर्द्धते *वारे च नो* वारवन्तीये च योनौ वसोरा-यायां द्वितीयमक्षरं वर्द्धते *राहेनौ तृतीये देवृधन्तातरुतां* वा-राहे योनौ तृतीये पादे वृधन्ता तरुतामापद्यते । अन्यत्र निवृ-त्यर्थम् *श्रीवासिष्ठउतद्विषापतिः कवीं* श्रीणंतोगोभिः वासिष्ठे उत द्विषापतिः कवीमापद्यते इन्द्रक्रतुनेतियस्ययोनिः *अयंदासो-त्तरयोः तृतीयोच्चाच्छतोत्पत्तिः* अयन्तइन्द्रसोमइतिदैवोदासो-त्तरयोस्तोत्रीययोश्चान्त्यं त्रिर्भवति *ष्कले जास्वर उपशिक्षा-यां प्राक्प्रहूयसायाः* पौष्कले जास्वरोत्पत्तिर्भवति । उपशिक्षायामृचि प्राक्प्रहूयसायाः *क्रेष्वायास्ये पुनान इत्यत्र सोमं॑सो देवृद्धे* साद्यस्क्रेष्वास्ये पुनानः सो-मायां पुनानसोमउत्सोशब्ददेशब्दौ वृद्धौ भवतः *धौच* *धौ-शब्दश्च तस्मिन्नेव वृद्धोभवति *इन्द्रमच्छायां व्यक्षरायामादिः साद्यस्क्रएवायास्ये व्यक्षरायां सोमायामादिर्वर्द्धते *मीढेमोच्चं-नीचं* पौरुमीढे प्रथमोच्चादिनीचं स्वरमापद्यते । यथात्वमङ्गप्र-शं॑सति । २२३ । *द्व्युच्चं पितापवमानामाशिवासश्च* अकारः प्रतिषेधार्थः । पितापुत्रेपवमानाभ्यर्षसिमाशिवासो अवक्रमुः । एतेषु प्रथमोच्चादिः नीचीभावप्रतिषेधः *जयसितश्यैतेषु शवचतुर्थे वव-पामन्द्रे* संजयगायत्र्यासितश्येतैषु एतेषुसामसु शप इव एते त्रयः शब्दाः यथाक्रमेण चतुर्थे स्वरे भवन्ति ववप इत्येते

द्वयुत्त्वं पितापवमानामाशिवासश्च जयासितश्यैतेषु शवचतुर्थेववपामन्द्र ॥ ४ ॥

आदिद्योदा तस्य हृदुक्थरूपयो र्द्वितीयं यं प्रत्युत्क्रान्तं प्राप्तं चाभिगीतं भीशवगतश्यैताजिगोत्तरयोनित्रस्वारयामैषिरवाभ्रवीषाहरवाचःसामहत्कप्रिये-

---

त्रयः पूर्ववन्मंद्रे भवन्ति । आते अग्ने तृतीयायां संजये । पवस्व देवतृतीयायां । गायत्र्यासिते इमाउवातृतीयायां श्यैते ॥

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये नवमस्य चतुर्थी कण्डिका ॥

*आदिद्वोदातस्यहृदुक्थरूपयोर्द्वितीयं यं प्रत्युत्क्रान्तं प्राप्तं चाभिगीतम्* । आदिद्वोदाआवृत् । तस्याबार्हदुक्थवैरूपयोः साम्नोः द्वितीयमक्षरं दीर्घंप्रत्युत्क्रान्तं भवति । योनिवद्गानं प्राप्तं प्रत्युत्क्रमायां प्राप्तं च ह्रस्वमक्षरं योनिवदभिगीयते । परीतोषितृतीयायां तवाहंसोमादिषु च बार्हदुक्थे अध्वर्यो अद्रिभिरुच्चातेजावैरूपे । *भीशवगत श्यैताजिगोत्तरयोनित्रस्वारयामैषिरवाभ्रवाषाहरवाचः सामहत्कप्रियेषु *आभीशयादिषु यदधिकृतं तद्भवति । किञ्चाधिकृतम् ? । दीर्घमभिगीतं प्राप्तं प्रत्युत्क्रामति । ह्रस्वं च प्रत्युत्क्रामप्राप्तं योनिवद्भावादभिगीयते । आभीशवे तवाहं सोमादिषु । योनिवदभिगीतप्राप्तं प्रत्युत्क्रामति । पुनापरीतयोः द्वैगते योनिवत्प्रत्युत्क्रामप्राप्तमभिगीयते । पुरोजित्युत्तमायामुत्तरे जनित्रे अभिगीतप्राप्तं प्रत्युत्क्रामति । वसिष्ठप्रिये स्वासूत्तमायां अभिगीतं प्राप्तं प्रत्युत्क्रामति । बृहत्केत्व..द्वैग्यायामुत्तरयोरभिगीतप्राप्तस्य प्रत्युत्क्रामः । तदिदासोत्तरयोरभिगीतप्राप्तस्य प्रत्युत्क्रामः । आजिगे उच्चावध्यामायां प्रत्युत्क्रामप्राप्तस्याभिगीतः । प्रोअयास्यां योयन्स्वारयासतस्मिन् यदभिगीयते अक्षयं

ष्वगूरमिस्निर्हन्वंन्नपोक्षाश्च बोधीयेसर्वमयोनौ नित्रे च
विषे च गीथे नप्रवाज्युत्तरयो स्त्रयानिधनयोराभिहित-
पौष्कलहव्यगार मानववंतीयभरपर्णयामसु ॥ ५ ॥

---

तदूहगीतावाप्यूगन्ते तथैव प्राप्नोति, यच्च प्रत्युत्क्रान्तं तदपि तथैव-
योनिवद्भावात् एवं प्राप्तमेतस्माद्वचनात् । वृषामतीयासे दीर्घमभि-
गीतं प्राप्तं प्रत्युक्रामति ह्रस्वं च प्रत्युत्क्रान्तन्तदपि तथैव योनिव-
द्भावादभिगीतप्राप्तस्य दीर्घत्वं प्रत्युत्क्रामः । प्रोअयास्यांयस्तार-
यामन्तस्मिन् यदभिगीयते । अक्षरं तत्तस्माद्वचनात् । वृणाम-
तायामेदीर्घमभिगानप्राप्तंप्रत्युत्क्रामः । यस्तोमदायांवार्षाहरे । यो-
निवद्भावप्राप्तस्याभिगीतांसोमउष्वावोम्र अभिगीतप्राप्तस्य प्रत्यु-
त्क्रामः । अभिद्युवाचः साम्निर्योनिवद्भावप्राप्तस्याभिगानं । सो-
मउष्वावाम्र अभिगानप्राप्तस्य प्रत्युत्क्रामः। अभिद्युवाचःसाम्नि-
योनिवद्भावादभिगानप्राप्तस्प दीर्घत्वं प्रत्युत्क्रामः *अगूरामिस्नि-
र्हन्वन्नपोक्षाश्च* । अकारः प्रतिषेधार्थः । उत्सर्गप्राप्तानामेतेषां
ग्रहणान्नभावः । प्रसोमदेवाद्यान्त्ययोर्द्वैगतेगूशब्दरशब्दौ । यस्ते
मदोत्तरयोः वार्षाहरेमि शब्दास्निशब्दौदं शब्दानां । अभिद्युम्नो-
त्तमायामैषिरेवाचः साम्नि न्वशब्दः । मैषिरे अपः शब्दः सोम-
उष्वोत्तमायां वाम्रेअक्षाशब्दस्य ग्रहणात्प्रत्युत्क्रामः । *बोधीये-
सर्वमयोनौ *जराबोधीये सर्वं प्रत्युक्रामति दीर्घं ह्रस्वं च ।
पूर्वजनित्रे च सर्वं प्रत्युक्रामति योनिवर्जम् । *नित्रे च हविषे
गीथे* पूर्वजनित्रे सौहविषे च उदुगीथे सर्व प्रत्युक्रामति
*नप्रवाज्युत्तरयोः* प्रवाज्यक्षायां सौहविषउत्तरयोः स्तोत्री-
ययोः प्रत्युंक्रामप्रतिषेधः । *त्रयानिधनयोराभिहितपौष्कल-
हव्यगारमानववन्तीयभरपर्णयामसु* आत्रेयादीनां साम्नां

अथोस्थभावोवृद्धमाउयत्प्रकृत्या तस्यग्रहणमऽपदां-

प्रत्युत्क्रामप्रतिषेधः । उत्सर्गप्राप्तस्य ह्रस्वमभिगीयते । दीर्घं-प्रत्युक्रामतीति । अनेनोत्सर्गेण प्राप्तं प्रत्युत्क्रामात् निवर्तते । आनिधने च पुरोजितानुत्तरयोरुत्सर्गप्रतिषेधः अभि अकारः प्रतिषेधार्थः । अग्निनर इत्यत्र प्रत्युक्राम एव भवति न प्रतिषिध्यते । संहिति प्रसोमासोमदच्युतायां प्रत्युत्क्रामप्रतिषेधः । सखायामापौष्कलाद्यायां उत्सर्गप्रतिषेधः । पुरोजिमध्यमायां वैतहव्ये इदं वसोत्तमायां गारेसोमउत्तमध्यमायां मानवयोः दीर्घस्य प्रत्युक्रामप्रतिषेधः । उपत्वाजाद्यायां वारवन्तीये प्रत्युक्रामप्रतिषेधः । एवाहिसौभरे तृतीयायां प्रत्युक्रामप्रतिषेधः ऐडसौपर्णे-इन्द्रमभिजायमानमित्यत्र प्रत्युत्क्रामप्रतिषेधः पुनानोअक्रमीदभीतियामे उत्सर्गप्राप्तस्य प्रतिषेधः कतमस्यआह ह्रस्वमभिगीयते दीर्घप्रत्युक्रामतीत्यस्य ।

इति पुष्पसूत्रभाष्ये नवमस्य पञ्चमी कण्डिका ।

*अथोस्थभावः* कोऽस्याभिसम्बन्धः ? उच्यते । तालव्यमाइवृद्धमितितालव्यानां प्रकृतिविकारभाव उक्तः । अथेदानीमुस्थानां प्रकृतिविकारभावअनुक्तोऽवशिष्यते । स वक्तव्यः इत्यनेन सम्बन्धेनेदमारभ्यते । अथोस्थभावइति । उकारऊकारओँकारअकाराउस्थाः । तेषां च उस्थादीनां लक्षणान्तरेण पूर्वोक्तेन विकारोन प्राप्नोति । यथा ओँवौकारयोरकीभावे लोपः । तथाओवौकारयोरनन्तरस्वरनीचाद्ययोः प्रत्ययपयोः सर्वं वृद्धमाभवत्यन्तलोपश्चेति । तथा तृतीयादिन्यामौ होवायां चतुर्थस्योवृद्धः । पदान्तः सर्वत्राभवति । तथा आउवाव्यवहितमाउ भवति । तथा ओपापत्याय ओकारो-

तः समानं च नरवेविकल्पेप्रियावसुसिर्सादतुभूरितेव-

---

निष्पद्यते तस्य च नेहाधिकारः तस्याप्यनादेवलक्षणं अका-
रोवृद्धः पदगीतः पादान्त इत्येवमारभ्यते, तस्मादेतैर्लक्षणैर्यद्
स्पष्टमुख्यं तस्येहाधिकारोवर्तिष्यते । वृद्धमाउयद्वृद्धमु उदा उभ-
वेति उगतिर्भवतीत्यर्थः । उदाहरणानि पाहिचतस्राभिर्वसौरैरवे ।
उपद्रवविषये ॐवौकारकेरित्यपवादः आपद्धुवः शतक्रतोरेवती-
ष्या उभावः राधस्तन्नोविदद्वसोवीकेत्ˆवहिनः पितावसोसोश्रवसे ।
स्तोरामिद्दधिषेरदावसो महावैष्टम्भे तु विशुष्मतुविक्रतो काले-
ये त्वं गव्युः शतक्रतो त्वˆ हिरण्ययुर्वसो इति च शाक्त्ये । कˆ
हुनः कम्वसौ । अस्माˆ इन्द्रवसौ इति बार्हद्गिरपार्थुरश्मियावज्रिन्न-
पसोनविष्टौकाणवे । इन्द्रस्येववग्नुराश्रृण्वआजौ पार्थवासिष्ठयोः ।
विचक्षणोजागृविर्देववीतौ । वासिष्ठे ॐकार अकारयोरुदाहरणा-
न्येतानि । उकारस्य तु प्रकृतिभावोवक्तव्य उपरिष्टाद *यत्प्र-
कृत्या तस्य ग्रहणम* यद्वृद्धं मुख्यं प्रकृति भवति तस्य ग्रहणं
यदुख्यं वृद्धं प्रकृत्या भवति तद्वक्ष्यामः इति प्रतिज्ञा *अपदान्तः*
यत्प्रकृत्याभवति तद्वक्ष्याम इति इदानीमुच्यते । उकारऊकार
ॐकार अकार अन्तःपदिका तु प्रकृत्या भवन्ति । अपदान्तः अन्त-
पदिक इत्यर्थः उदाहरणावि वक्ष्यामः तवाहˆ सोतवाहन्नक्त मुतसो
इति वस्त्रस्पृष्टेषु पुनानस्सऐडयास्ये आयोनि असत्रासाहीययामयोः
एवमादीनि* समानं च*समानाक्षरं वृद्धं प्रकृत्या भवति । उकारः
समानाक्षरः । ननु उस्थत्वादेवास्य प्राप्तिः कस्मान्न गृह्यते इति ?
उच्यते । विशेषार्थं पूर्वसूत्रे अन्तःपदिकानामुख्यानाधिकारः उ-
कारस्य तु पदान्तीयप्रकृतिभावार्थं पुनर्ग्रहणं तस्मात्सर्वप्रकारस्य
प्रकृतिभावः । अन्तःपदिकस्योदाहरणानि उक्तानि पुरस्तात् पदा-

न्नीदोषोदाहरणानि वक्ष्यामः ] उत्सएेडज्यास्ये प्रतिहारोद्गीथयो-
र्देवान्गच्छन्नुपद्रवेबृहति चरथन्तरे च प्रतिहारेपदेषु हाविष्कृत-
शाम्मददावसुनिधनचीनेडहाविष्कृतवैदन्वताग्रचतुर्थेषु एवमादीनि
सङ्क्षेपः । उकारपदान्तयिश्चापदान्तयिश्च प्रकृत्या भवति *नर-
वेविकल्पेप्रियां वसुसिसादितुभूरित—वसुनसुनिधनत्वात्सोम्यं म-
धु* पदान्तीयस्याप्युकारस्याप्रकृतिभाव इत्युक्तं, इदानीं पदान्ती-
यस्याप्युकारस्यापवादः वक्ष्यमाणेष्वोदाहरणेषु रारवविकल्पवि-
षये पदान्तीयस्य प्रकृतिभावमाप्तस्य उकारभाव उच्यते ।
परेष्वप्युदाहरणेष्वेवमेव द्रष्टव्याप्रियावसुयेददति यावसुवाम-
देव्ये प्रस्तावे प्रकृतिभावापवादः सुन्वतेभूरितेवसुपार्थुरश्मे-
सन्तनिनि एव शब्दोनविक्रियते निधनत्वात्सन्तनिनि सो-
यमपवादः सिसीदतुध्रुवेसद सीदतु यामयोगैरांशिगीरस्य सा-
हीये तुत्वोषप्रसयत्वाग्नौभावः तेन्वोषेदुष्वष्ट इति *सोम्यं मधु*
उकारेप्रत्यये विक्रियते बृहति उपद्रवविषये अन्यप्रसयस्य
उपकृतित्वमेव यथा वारवन्तीधु एवं स्थिते उकारस्याप्यन्यथाप-
त्तिः परएवं स्थिते प्रत्ययत्वेन निर्देशात्सप्तमीप्रयोगः । विउका-
रे प्रत्यये इति *ॐकारः पादमध्येपदान्तीयाधिकारमुपजीवन्नो-
कारस्यापि पदान्तीयस्य विकृष्टे विषये प्रकृतिभावमाह ॐकारः
पदान्तीयः प्रकृत्याभवति । किं सर्वत्र ? न पाद मध्येॐकारः
पदान्तीयस्य प्रकृत्याभवति अन्तः पदिकः सपश्चात्प्रकृत्या भवति
इदइत्युक्तं पदान्तीयस्यविक्रियत एव । उदाहरणानि सख्य इन्दो-
स्वः पृष्ठमरायद्विनिधनायास्य बृहत्युत्सेधे तु तृतीयादिन्यामौहोवा-
यादिसामौ होवायादित्यपवादाभावः इदो सहस्रं यज्ञायज्ञीये इन्दो-
समुद्रमाविशेनासकाक्षीवतासितेषु गोजीरयाऽयावाऽवेएवमादीनि ।
*अये दो*ॐकार पादमध्ये पदान्तीयः प्रकृत्याभवति इत्यस्यो-

**सुनसंतनिनिनिभनत्त्वात्सोम्यंमधु ज्योकारः पादमध्ये-येन्दो बभ्रोरेतरे वसोवसूनि दांतेयहोध्रिगोस्तावेमिन्दं वौकारउराविमौमधोमतौतस्थौ योनौचाभे ॥ ६ ॥**

---

त्सर्गस्यायमपवादः। इन्द्रायेन्द्रो इति अपवादो इषोटधीयक्रौञ्चवा-यवावर्यादिषु न प्रकृत्याभवतीतिगति भवतीत्यर्थः । *बभ्रोरे* अत्रापि प्रकृतिप्राप्तस्यैवा ऽभावः । किमविशेषेण ?। न, स्वारे प्रत्यये यथा महावैराजे सहोदैर्घतमसे च । तृतीयायां उद्वीथमध्ये । दुहानोबभ्रओधनि । अन्तरोरथन्तरे बभ्रोशब्दस्य स्वरप्रत्यय-स्यापि प्रकृतिभावएव । *वसो *वसोर्वसो इत्यत्रापि ओकारः पादमध्ये पदान्तीयः प्रकृत्या भवतीत्यस्य उपवादः । अगतिर्भवती-त्यर्थः । क्रौञ्च रयिष्ठौ दलादिषु । अभीनोवाइत्यत्र । *घवसू-नि* अप्रतिषेधार्थः । इह ओ कारः पादमध्ये पदांतीयः प्रकृ-त्या भवतीत्येतदेव औत्सर्गिकं प्रतिप्रस्तु *दान्तेयहोध्रिगोस्तावे-मिन्दो *अन्तः पदिकस्य ओकारस्य प्रकृतिभाव उक्तः । इदानीं पदान्तावस्थितस्य ओकारस्य विशिष्टविषये परिसंख्यानरूपेण प्रकृतिभाव उच्यते । उदाहरणत्रयेण यहोईशानः सदसोयहो-श्रुध्यपौष्कलयोः । अध्रिगोस्तावे यज्ञायज्ञीये । गोपारिस्यस्वा २ नो २ अक्षरदिन्दुरवा ३ ईमिन्दोनुनोभार्यमहामिन्दोयामे । एतेष्वेव त्रिषूदाहरणेषु ओकारस्य पदान्ते प्रकृतिभावः । अन्य-त्र विक्रियते । तदुदाहृतं दृद्धमा उइसत्र *ओकारउराविमौ म-धोमतौ तस्थो *अकारस्यौत्सर्गिकेन लक्षणेन किं प्राप्तं? पदान्तः प्रकृत्याभवतीति । अन्तःपादिकस्यौकारस्य प्रकृतिभाव उक्तः । परिशेषात्पादमध्ये सर्वत्र पदान्तीय अकारस्यं अ ऊ भवतीति-स्थितं वक्ष्यमाणेष्वेवोदाहरणेषु परिसंख्यानरूपेण पादमध्ये पदा-

रथतरेस्तावाद्यमाद्यायांवृत्त्सर्वत्र ण्वतरेतुरीयंनी-
चंसर्वत्र चमंनजातोदब्धः सुदेवोवः षेधे च तृतीय-
चतुर्थे देदुरितावसत् आजावितोत्तरयोरेन्द्रयाहिपूर्व-

---

न्तीयस्य औ उकारस्य प्रकृतिभाव उक्तः। तस्यस्तोभप्रतिषेधस्य अत्रोच्यते । यथाउरौरथनाभेइमौभद्रौवन्तीये । मघौनमक्षगा-यत्रपार्श्वे । सुमतौवाजिनोवयं । जमदग्नेरभीवर्त्ते तस्थौनाकस्य शर्मणि अभिनिधने । *योनौ च । योनौशब्दे च ऊकारः पादमध्ये पदान्तीयः स च प्रकृत्या भवति । सीदन्योनौ वार्षाहरे । *अभे *अकारः प्रतिषेधे योनौशब्दे अकारस्य प्रकृतिभाव उक्तः तस्य स्तोभे प्रतिषेधः । आउ भवतीत्यर्थः । यथापार्थे । तथा कात्रियोनौ आथर्वणे स्तोभे तु विशेषः । पुनरुक्तमिदं सूत्रःस्तोभे-प्रत्ययेऔत्सर्गिक एव लक्षणविशेषोभवति । यथा आर्थर्वणवार्षयोः । अथवा अन्यथाव्याख्यते ॥

इति पुष्पसूत्रभाष्ये नवमस्य षष्ठी कण्डिका ॥

रथन्तरे स्तावाद्यमाद्यायां वृत्सर्वत्र* रथन्तरे प्रस्तावाद्यमक्षरं आद्यायां सर्वत्र वृद्धं भवति । ण्वतरेतुरीयं नीचं सर्वत्र* कण्वतरे प्रस्तावे यच्चतुर्थमक्षरं नीचं सर्वत्र भवति* चमंनजातोदब्धः सुदेवोवः*नजातोनजनिष्यते । अदब्धः सुरभिनरः देवोवोद्रविणोदा इत्येतेषु पचमं नीचं भवति *षेधे च तृतीयचतुर्थे देदुरितावसत* सिमानानिषेधे च तृतीयचतुर्थपादविषये अपसेधंदुरितासोमनोमृडसद्भावभिर्वसतेवीत-अध्वरइति । एतयोः पञ्चममक्षरं नीचं भवति *आजावितोत्तरयो-रेन्द्रयाहिपूर्वयोः पर्यूषुचोपान्स्योवापतिक्रिरा* आजाग्नविरिस्मत्र

योः पर्यूषु चोपान्त्योच्चा पर्ति गिरा सितेच देवाद्ययोस्तृतीयोच्चान्त्यमाग्निमीसेधे चाभिसोमाद्ययोः, पिबासु चाद्यायां, नदेवस्वास्वाद्ययोः, डिनेचतुर्थो-च्चानि यथा योनावाद्यं द्वितीयायां प्रथमे निघा-तान्मन्द्रे तृतीयायां च तृतीययोः, कौल्मं इष्टा-सिकृणुष्टाम् आशुभार्गवे ऽयक्षरोद्या पंचाक्षरोच्चा-ऽऽद्ययोर्योनिवदस्य मध्यमायामातूनाकूपारेचाद्यायां

---

गौरीवितोत्तरयोः । ऐन्द्रयाहिगौरीवितपूर्वयोः पर्यूषु चैकचे च उपान्त्यमक्षरं उच्चं भवति । *पतिङ्गिरा *आद्ये पर्वणि । *सिते च देवाद्ययोस्तृतीयोच्चान्त्यमग्निमी* । आसिते पवस्व-देवाद्ययोः स्तोत्रीययोस्तृतीयोच्चान्त्यं द्रव्यमाग्निमीस्वरं भवति । *सेधे चाभिसोमाद्ययोः* । उत्सेधे चाभिसोमाद्ययोःस्तोत्री-ययोस्तृतीयोच्चान्त्यं द्रव्यमग्निमीस्वरं भवति । *पिबासु चा-द्यायाम्* । तृतीयोच्चान्त्यं द्रव्यमग्निमीस्वरं भवति । *न देवस्वास्वाद्ययोः* । तृतीयोच्चान्त्यं पूर्ववत् । *डिनेचतुर्थो-च्चानि । यथा योनावाद्यं द्वितीयायां प्रथमे, निघातान्मंद्रतृतीयायां च तृतीययोः* शंखण्डिने चतुर्थोच्चस्याद्यमक्षरं नीचं भवति द्वितीयायां स्तोत्रीयायां च प्रथमतृतीयायां स्तोत्रीयायां प्रथम तृतीययोः पादयोः । *कौल्मं इष्टासिकृणुष्टां* । कौल्मलबर्हिषे इष्टासिकृणुष्टास्वरमापद्यते । *आशुभार्गवे ऽयक्षरोद्याः* आशु भार्गवे अक्षरोद्या भवति सर्वत्र *पञ्चाक्षरोच्चाद्ययोः* उच्चाते जायामाशुभार्गवे आद्ययोःस्तोत्रीययोः पञ्चाक्षरा उच्चा भवति । *योनिवदास्य मध्यमायाम्* अस्य प्रत्ने यत्राशुभार्गवे मध्य-मायां योनिवदुच्चा भवति । चतुरक्षरेत्यर्थः । *आतूनाकूपारे चाद्यायां त्र्यक्षरोत्तरयोः* आतूनाकूपारे उत्तरयोर्त्र्यक्षरयोरुच्चा

द्यक्षरोत्तरयोः, अच्छिद्रैकर्चेणोनीचः शेतः शब्दश्चावृद्धौ विचे प्रत्यये, वृद्धः सिते वृण्यन्तः, क्षीवते-द्वितीयपादान्त्यमद्वितीयस्वरम्, विशीये मोच्चादि नीचो नौ अहिन्वंति सर्वासु, ज्ञीयक्ष्वाद्यायां ज्ञीयवद्, अन्यदुच्चं सकृत्कृष्टं च तृतीयं नौ द्वितीयमुत्तरयोः, एकाक्षरे णिधने च जये शताद्वितीयम् ॥ ७ ॥

भवति *अच्छिद्रैकर्चे णोनीचः शेतः शब्दश्चावृद्धौविचे प्रत्यये* प्रहिन्वानाच्छिद्रे णोशब्दो नीचो भवति । शब्दस्य अवृद्धो भवति विचशब्दे प्रत्यये। *वृद्धः सिते वृण्यन्तः*। आसिते अयं पूषादिषु वृणीमहाया अन्तो वर्द्धेत । सर्वमार्चिकमवृद्धमुत्तरे पुष्ये योनिवद्भावात् आकर्षणकृता वृद्धिः प्राप्नोति, तस्य निवृत्त्यर्थमिदमुच्यते सर्वमार्चिकमवृद्धमुत्तरेपुष्य इति *क्षीवते द्वितीयपादान्त्यमद्वितीयस्वरम्* । काक्षीवते द्वितीयपादान्त्यमक्षरे अद्वितीयस्वरं भवति अतिक्रमो भवतीत्यर्थः । *विशीये मोच्चादि नीचो नौ* विशोविशीये प्रथमोच्चाद्यमक्षरं नीचं (१)भवति योनौ। अग्निवो ३ २। *अहिन्वन्तिसर्वासु* । अकारः प्रतिषेधो हिन्वन्ति विशोविशीये प्रथमोच्चान्त्यमक्षरं नीचं भवति सर्वासु, अर्थादन्यत् सर्वमुच्चम् । *ज्ञीयक्ष्वाद्यायां ज्ञीयवत्* यज्ञायज्ञीयर्क्षु विशोविशीये आद्यायां यज्ञायज्ञीयवत्प्रथमोच्चं भवति । *अन्यदुच्चं* । अन्यत्प्रथमोच्चं विशोविशीये सर्वमुच्चं भवति । *सकृत् कृष्टं च तृतीयं नौ* । सकृत्कृष्टं चाक्षरं प्रथमोच्चं तृतीयोच्चं भवति *योनौ विशोविशीये *द्वितीयमुत्तरयोः*योनावत्रोत्तरयोः प्रथमोच्चद्वितीयमक्षरं सकृत्कृष्टं भवति । *एकाक्षरे णिधने च जये शताद्वितीयम्* । एकाक्षरे णिधनेच यौधाजये शताया द्वितीयस्वरापत्तिर्भवति ।

इति पुष्पसूत्रभाष्ये नवमस्य सप्तमी कण्डिका ॥

(१) नीचीभवतीति पाठः ।

गृद्दे उत्तरयोर्होतायक्षाम्, ऋतुष्वा ज्ञीयवत्तौरे प्र-स्तावो योनौ प्रत्नं॰सधस्थायां यजिसंघातवत्, पूर्वा-र्कपुष्यरयिष्ठयोः स्तौभिकं पर्वानुपाद॰ सामान्ते सर्वाणि आर्चिकमकृष्टं॰सर्वत्राऽयोनौ, वैधृते ष्ठे नौ थे रे च द्वितीयम्, वास्रे चायोनौ, छिद्रे ऽभिसो-माद्यायांनीचंध्यभ्यासे ज्ञीयर्क्षु विशीयांत्यायां॰ स्या-

---

*गृद्दे उत्तरयोर्होतायक्षाम्* । गृद्दे उत्तरयोः स्तोत्रीययोर्हो-तायक्षां संघातमापद्यते यक्षादयासी *ऋतुष्वाज्ञीयवत्तौरेप्रस्ता वोयोनौ* ऋतुष्ठायज्ञायज्ञीये यद्रूपः प्रस्तावः तौरश्रवसेऽपि तद्रूपः प्रस्तावो भवति योनौ तु प्रकृतिरापद्यते विकाराविवक्षया । *प्रत्नं॰ सधस्थायां यजिसङ्घातवत्* । प्रत्नं॰सधस्थायां तौरश्रवसे प्र-स्तावे यजिसङ्घातवत् प्रस्तावो भवति । *पूर्वार्कपुष्यरयिष्ठयोःस्तौ-भिकं पर्वानुपादम्* । पूर्वार्कपुष्ये रयिष्ठे च स्तौभिकमेव पर्वानुपादं भवति । संपादमनुगतं भवति । *सामान्ते सर्वाणि* । स्तौभिकानि पर्वाणि सर्वाणि भवन्ति । यथा—परीतोषिञ्चतापत्रस्वादिषु । *आर्चिकमकृष्टं॰सर्वत्रायोनौ* पूर्वार्कपुष्यरयिष्ठयोरार्चिकमक्षरं अकृष्टं भवति सर्वत्रायोनौ । योनावेव कर्षणं भवति नान्यत्र *वैधृते ष्ठे नो थे रे च द्वितीयम्* *वैधृते* वासिष्ठे योनौ उद्गीथे प्रतिहारे च द्वितीयमक्षरं वृद्धं भवति । एषप्रकारो ऊहगीतौ न भवतीत्यर्थः । अभिप्रियाण्यां । *वास्रे चायोनौ* । वास्रे च उद्गीथाद्द्वितीयं वर्द्धते । अभीषुवोरयीणामित्येवमादिषु । अयोनौ योनौ तु प्रति-षेधः ॥ *छिद्रेऽभिसोमाद्यायां नीचं ध्यभ्यासे* । अच्छिद्रे अभि-सोमाद्यायां धीसेतदक्षरं नीचं भवति अक्षरसंघातविषये धीशब्दो नीचो भवति न पूर्वस्मिन्प्रथमे । *ज्ञीयर्क्षु विशीयान्त्यायां॰स्या-

मान्माभयोरेकत्वान्माभासं पूर्यते, द्विस्वरे विराममेके ण्वबृहति च शतान्माभयोः अञ्जोरूपद्यमायामुस्थमाउवायां विरामम्, डिनतृतीयायां स्तावेऽभ्यासाभावमेके रं घोषे वा विसर्जनीय आम्नायसिद्धत्वाद्, बहती क्रौञ्चे तृतीये पादे तृतीयोच्चमभीवर्त्तवद्, ददद्राणतृतीयायां च रक्षाशतासूष्वे, पतिः

---

मान्माभयोरेकत्वान्माभामासंपूर्यते* । यज्ञायज्ञीयर्क्षु विशोविशीयस्तोत्रीयायां स्यामान्माभयोरेकत्वान्माभा सम्पूर्यते ॥ *द्विस्वरे विराममेके* । तस्या एव माभाया चतुर्थे स्वरे एके आचार्या विरामं मन्यन्ते *ण्वबृहति च शतान्माभयोः* । ज्ञीयर्क्षु कण्वबृहति अन्त्यायां शतान्माभयोरेकत्वं ज्ञत्वाव मात्रा संपूर्यते । द्विस्वरे च विराममेके आचार्या मन्यन्ते । *अञ्जोरूपद्यमायामुस्थमाउवायां विरामम्* । अञ्जोरूपमद्यमायां उस्थमक्षरम् आउवायां परभूतायां विरामं(सन्धीयत)भवतीत्यर्थः। *डिनतृतीयायां स्तावेऽभ्यासाभावमेके* । शैखण्डिनतृतीयायां प्रस्तावे अभ्यासे प्रत्यये अभावमेके आचार्या मन्यन्ते *रंघोषे वा विसर्जनीय आम्नायसिद्धत्वात्* रेफापत्तिर्वा विसर्जनीयस्य भवति घोषे प्रत्यये । कस्मादाम्नायसिद्धत्वात् । तथैव हि आम्नानं कृतमूहगाने । *बृहती क्रौञ्चे तृतीये पादे तृतीयोच्चमभीवर्त्तवत्* । क्रौञ्चे तवोतिभवायां तृतीये पादे तृतीयोच्चं पूर्वमभीवर्त्तवद्भवति । नौ चतुर्थमन्द्रेद्व्यक्षपिर्वभवन्ति । *दद्राणतृतीयायां च रक्षाशतासूष्वे* विधुं दद्राणतृतीयायां च अग्रेरक्षा शतासूष्वे यथा तद्वत्प्रत्येतव्याः । आद्यस्याक्षरस्य लोपार्थं वचनम् । अन्ये पुनरिहाप्येक इति अधिकारमनुसारयन्ति चशब्दात् । तेषां पक्षेणसनातृती-

कर्त्रीषुचान्त्यस्याक्षरस्याभ्यासः सर्वास्वतृतीये पादे कृष्टवृद्धयोर्मध्ये वीतं लुप्यते, कीर्त्ययशः सꣳसर्पेषुवान्त्येयातिः शब्दौ नीचौ, अरोचयत्सर्वत्र असूर्यꣳ, श्यैतै, हुम्मा, ज्ञायिवत्क्षारादिश्च गौशृङ्गे संजया भीशववैयश्वसाध्रादिषु लक्षणसिद्धत्वाद् द्रव्यान्तर एकं पर्व भवति, नमसा लेयवच्छायन्तीये, मराये हाउ-

---

यादिना एव भवति। *पतिः कर्त्रीषु चान्त्यस्याक्षरस्याभ्यासः सर्वास्वतृतीये पादे* । पतिः कर्त्रीषु चान्त्यस्याक्षरस्याभ्यासः सर्वासु तृतीयपादवर्जम्। *कृष्टवृद्धयोर्मध्ये गीतं लुप्यते* । सर्वमेतद्द्राणवतीषु। *कीर्त्ययशःसꣳसर्पेषु वान्त्येऽययतिः शब्दौ नीचौ* कीर्त्ययशःसंसर्पेषु प्रस्तावान्त्येवर्णान्तस्थोवर्णोनीचो भवति। इन्द्रमिद्देवतातये श्रायन्तःपुनानादिषु *अरोचयत् सर्वत्र*। इन्द्रः सूर्यमरोचयदिति सर्वत्र नीचीभावः। त्वमिन्द्रयशा असीत्यत्र *असूर्यम्*। अकारः प्रतिषेधार्थः। अन्तस्थोऽपि न नीचो भवति। श्रायन्त इव सूर्यम्। *श्यैतेहुम्माज्ञीयवत्*। श्यैते हुंमायज्ञायज्ञीयवत् भवति। कर्षणस्य निवृत्त्यर्थं वचनं। *क्षारादिश्च गौशृङ्गे*। गोशृङ्गे क्षारादिर्यज्ञायज्ञीयवत् प्रस्तावान्ते। *सञ्जयाभीशववैयश्वसाध्रादिषु लक्षणसिद्धत्वाद् द्रव्यान्तर एकं पर्व भवति*। सञ्जयाभीशववैयश्वसाध्रादिषु बृहल्लक्षणसिद्धत्वात् द्रव्यान्तरे ऊहगीतावेकं पर्व भवति। कथं सा सिद्धिरिति चेत्। आह त्रापिणीयांस्वयंतत्प्रकृतंप्रथमोच्चात्संहन्यतइत्यत्र त्वं वृत्राणीतिग्रहणात्। तथा अत्रैव उत्तमगीते वर्द्धत इत्यत्र, तथा देनीचानामित्यत्र पोतीयसीतिग्रहणात्। *नमसा लेयवच्छायन्तीये*। अच्छानः श्रायन्तीये

षान्तः कृष्टो वैराजे चायोनौ विनतप्रतिषेधो, वैरूपे तु देवतापदं देवतापदं निधने ॥ ८ ॥

अग्ने स्त्रिणिधन उष्वायां द्वितीयपादे द्वितीयं वृत्प्र-मान्गोवत्यां चानीकपायामाद्यं, नुष्मि च शोके प्रस्वरे, था उत्तरे दꣳष्ट्रे, सोशब्दे दासे, दुक्थेऽभिगीतक्रमयोर-हर्य मेधे हायिस्तोभातृतीयमयोनौ, कावे गीथषष्ठꣳ

---

अछायज्ञासोनमसेतिकालेयवदुच्चं नीचीभवति । *मराये हा-उवान्तः कृष्टः* । मराये हाउवान्तमक्षरं संकृष्टं भवति ऊहगीतौ । *विराजे चायोनौ विनतप्रतिषेधः* । महावैराजे च अयोनौ विनतपर्वणः प्रतिषेधः । *वैरूपे तु देवतापदं देवतापदं निधने* वैरूपे तु देवतापदं देवतापदमेवं निधनक्रमो भवति ऊहगीतौ ॥

(१)इति नवमस्याष्टमी कण्डिका ॥

*अग्नेस्त्रिणिधन उष्वायां द्वितीयपादे द्वितीयं वृत्प्र*। अग्नेस्त्रि-णिधने सोमउष्वायां द्वितीये पादे द्वितीयमक्षरं वृद्धं भवति प्रथमा-यां स्तोत्रीयायां ।*मान्गोवत्यां चानीकपायामाद्यं* मान्गोशब्द-वत्यां चानीकपायां आद्यमक्षरं वर्द्धते। सोमनुष्वात्रिणिधने द्विती-यायाम् । *नुष्पि च शोके प्रस्वरे* नुःशब्देपि शब्दे च प्रथमे स्वरे ऽवस्थितो वर्द्धते त्रैशोके । जजनूः । अपाइ *था उत्तरे दꣳष्ट्रे* उत्तरे दꣳष्ट्रे थाशब्दो वर्द्धते । *सोशब्दो दासे* । सोशब्दो रात्रिदासे वर्द्धते । अयन्त इन्द्रसो३ *दुक्थे-ऽभिगीतक्रमयोः* । बार्हदुक्थेच्छअभिगीतप्रत्युक्रमयोः परमक्षरंव-र्द्धते । *अहर्य* । अकारः प्रतिषेधार्थः । बार्हदुक्थेवृद्धिप्राप्तस्य अपवादः हर्यशब्दस्य । *मेधे हाइस्तोभात्तृतीयमयोनौ* । ना-

---

(१) उपाध्यायाजानशत्रुकृते पुष्पभाष्ये पञ्चमस्याष्टमीकण्डि-केतिपाठः पुस्तकान्तरे ।

सर्वत्र अञ्ज प्रपञ्चमं, प्रोअयास्या ंसप्तमं, त्वांदूतोदप-
प्तयाश्च, वैराजे प्रसशब्दावबृद्वैराजे प्रसशब्दावबृत्॥९॥

इति नवमः प्रपाठकः ॥

नकारश्च भवति सन्ध्यगीतः कुवित्सुनायां बोधीये, इहवद्दैवोदासे चोत्तमायामप्रथमः, स्वासु साहीये चो-

मोंधे हाईस्तोभात्परस्तात् तृतीयमक्षरं वर्द्धते योनिवर्जम् । *कावे गीथषष्ठ ंसर्वत्र* । कावे उद्गीथषष्ठमक्षरं वर्द्धते सर्वत्र । *अंजप्रपञ्चमं* अञ्जतायाम् । कावे उद्गीथपञ्चममक्षरं वर्द्धते प्रथमायाम् । *प्रोअयास्या ्सप्तमम् *प्रो अयास्यां कावे सप्तममक्षरं प्रवर्द्धते प्रथमायाम् । *त्वांदूतोदप्तयोश्च* । दूतमग्ने उदप्तमिति च एतयोः कावे उद्गीथसप्तममक्षरं वर्द्धते । *वैराजे-प्रसशब्दावबृद्वै राजे प्रसशब्दावबृत्* । महावैराजे प्रशब्दसशब्दो अवृद्धौ भवतः । सत्वामिन्द्रप्रभुव । स इमाब्रह्मास ।

(१)इति नवमस्य नवमी कण्डिका ॥

नवमः प्रपाठकः समाप्तः ।

*नकारश्च भवति सन्ध्यगीतः कुवित्सुनायां बोधीये* । जराबोधीये कुवित्सुनायामुद्गविषये नकारः सन्ध्यगीतो भवति पदगीतो भवति । विरते पदगीतमासौ सन्ध्यगीतत्वमुच्यते(२) । उरु २ कु ३३ दू ३२ रु २ णः । *इहवद्दैवोदासे चोत्तमायामप्रथमः* रात्रिर्दैवोदासे च उत्तमायां स्तोत्रीयायां नशब्द(३)द्वित्वेऽपि

---

(१) इति पुष्पभाष्ये नवमी कण्डिका पञ्चमः प्रपाठक इति पाठः पुस्तकान्तरे ।

(२) उरू ३ कु २ टूरू २ ण इतिपाठः पु० ४

(३) तशब्दद्विलेइतिपाठः ।

त्तमायाम्, अभिसोमाध्यास्यायाᳲ सर्वत्र, योनौ द्वीडे धर्ताद्ध्यक्षरं पर्व दीचोद्धातपरत्वादेकाक्षरमूनमधिकप-र्वत्वाच्च प्रथमस्वरे प्रत्यये कृष्यते अभिप्रि ऽयक्षरा-णिसर्वासु, न द्वितीयचतुर्थे पादे, मराये भ्यासएका-क्षरस्त्रिरुक्तपादान्ते सर्वत्र, अपुरोनः, पादमध्ये च हि-शब्दस्याः भ्यासः प्रेद्धायामग्ने दीदिहि ॥ १० ॥

सति द्वितीय एव नशब्दः सन्ध्यगीतो भवति । प्रणपात्कुण्डपायि-याः । *स्वासु साहीये चोत्तमायां *स्वासु सत्रासाहीये च उत्त-मायां प्रस्तावविषये नकारः सन्ध्यगीतो भवति अधिकारात् । शिक्षा२णइन्द्रराय आ । *अभिसोमाध्यास्यायां सर्वत्र* । अभि-सोमाध्यास्ये प्रहिन्त्वानायां सर्वसामसुनकारः सन्ध्यगीतो भवति । विकारात् । शिक्षा बार्हदुक्थादिषु णोहर्यतो । ३२ । *योनौद्वीडे-धर्ता द्ध्यक्षरं पर्वदीचोद्धातपरत्वादेकाक्षरमूनमधिकपरत्वाच्चप्रथम-स्वरप्रत्यये कृष्यते* । योनौ द्वीडेधर्ताद्ध्यक्षरं ऊनंचन ऊहगीताव-धिकं पर्वत्वाच्चान्तः प्रथमस्वराप्रत्यये दीशब्दः कृष्यते । सिद्धो-पन्यासो विशेषविवक्षया । धर्तादी ३२ । *अभिप्रि ऽयक्षराणि सर्वासु* । अभिप्रियायां द्वीडे अक्षराणि सर्वासु स्तोत्रीयासुभव-ति । *न द्वितीयचतुर्थे पादे* ऽयक्षराणि पर्वाणि भवंतीति यदुक्तं तस्यापवादः । किमविशेषेण अत्र आह—न द्वितीयचतुर्थे-पादे । *मरायेऽभ्यास एकाक्षरस्त्रिरुक्तः पादान्ते सर्वत्र* मराये साम्नि अभ्यास एकाक्षरः सर्वत्र त्रिरुक्तः पादान्ते सर्वत्र भवति। सिद्धोपन्यासो विशेषविवक्षया ॥ ण्यो ण्यो ण्योः । *अपुरोनः पादमध्ये च हिशब्दस्याभ्यासः *प्रद्धायामग्ने दीदिहि* । अत्रैव

(४) णोर्ध्यतो ३ पाठः ।
(५) अभिसीत्यधिकः पाठः ।

गूर्द्धैवृद्धओँभवत्यकारोऽग्निप्रत्यये वाऽऽदौ हिशब्दः, सौभरामहीयवकौल्मानां दासे च, कावपर्णकूलीयानामो भवति, साहीये च भिशब्दोऽनुत्कावे नाध्वतवत्यपर्णे बोधीये च वाचि सर्वमोभवत्य नुस्थमोवापरायांत्वोभ-

पादमध्ये च हिशब्दस्याभ्यासो वचनात् । मेद्धायामग्ने दीदिही ति । (अतस्मिन् हिशब्दः ।)

इति दशमस्य प्रथमी कण्डिका ।

*गूर्द्धैवृद्धओँभवत्यकारोऽग्निप्रत्यये वादौ* गूर्द्धैवृद्धः अकारः ओँभवति अग्निप्रत्यये प्रस्तावादौ । *हिशब्दः सौभरामहीयवकौल्मानां दासेच* हिशब्द ओँभवति एवाह्यसीति तृचे-प्रथमायां सौभरामहीयवयोः । कौल्मलबर्हिषि च स्वासु । रात्रि-दैवोदासे च हिशब्दओँभवति । *कावपर्णकूलीयानामो भवति* । कावेऐडसौपर्णयोः प्रस्तावे रोहितकूलीयेउपद्रवे । कुतः अनुषङ्गो-भवति । वाचिसर्वमोभवति तेन एतेष्वपि वाचि प्रत्ययभूतायां ओँभा-वः । तस्मादाद्ययोः (थमोसोभासाविपश्चित इति रोहितकूलीयोत्तर-यो)प्रस्तावे इतरत्रोपद्रव इति सिद्धम् । *साहीयेच भिशब्दः* । सत्रा-साहीये च(वसुवुत्रायां)उपद्रवायां भिशब्दओँभवति । *अनुत्का-वे* अकारः प्रतिषेधार्थः । कावउदयममामित्यत्र उच्छब्दोभावप्रति-षेधः । पूर्वलक्षणप्राप्तस्य *नाध्वतवत्यपर्णे* *ऐडसौपर्णे अध्वर्यो-अद्रिभिरित्यत्र योशब्दस्य प्रकृतस्यैव ओँभावप्रतिषेधः । तवस-इत्यत्रापित्यशब्दस्य ओँभावप्रतिषेधः । मध्यमपत्रायाचापिति-पकारः प्राप्नोति तत्प्रतिषेधार्थं वचनम् । *बोधीये च* जराबो-धीये च वाक्यान्त्ये ओँभवति*वाचिसर्वमोभवति *गूर्द्धै-वृद्धओँभवत्यत आरभ्यओँभाव उक्तः । कस्मिन्प्रत्यये ओँभा-वोभवतीत्याह । वाचिप्रत्यये सर्वेषामेतेषां ओँभवति नान्येष्वेतेति ।

वत्यऽनातृतीयं कृष्टमप्रत्युत्क्रान्तमाचतुर्थकृष्टन्तु पादान्ते मन्द्रकृष्टञ्चामन्द्रकृष्टञ्च वृधेऽयंजानानाः सनित्य इत्ये-

सर्वशब्द अधिकारव्यतिरेकार्थः अन्यत्रापि सर्वत्र वाचिप्रत्यये ओ-भावो भवतीत्यर्थः। यथा श्रौतकक्षाणभगौरीवितामीवर्त्तवात्सगृहा-दिषु। *अनुस्थम्* अकारः प्रतिषेधार्थः उस्थस्य वाक्प्रत्ययस्या-पि ओभावप्रतिषेधः यथा स्वासु स्वारसौपर्णे सिसूर्थमित्यत्र उ-स्थग्रहणेन उकार ऊकारौ गृह्येते। *ओवापरायां त्वोभवति* ओवापरायां तु वाचि उस्थमप्योभवति। यथा जागृरित्यत्र गौ-शृङ्गे। रथिरासः सुवां। तथा हारायणप्रसोमदेवव्रीतय इ-त्याद्यायां। अच्छाकोशंमधोवा ३। तथा कौलमलबर्हिषेपारी-तोष्युत्तमायां श्रीणं तोगोभिरोवारि *अनातृतीयं कृष्टं* अकारः प्रतिषेधार्थः वाचिसर्वमोभवतीत्यस्योत्सर्गस्यायमपवादः। आतृतीयकृष्टं तु वाकृतृतीयमपि न ओभवति। यथा-ऽऽग्नेयव्रबृहदाग्नेयस्वारसौपर्णेषु प्रतिहारे *अप्रत्युत्क्रान्तम्* अकारः प्रतिषेधे इह प्राक्प्रत्ययस्यैव पूर्वपदापवादः। यत्र प्रत्युत्क्रान्तं वाक् प्रत्ययं तस्य ओभावप्रतिषेधः। यथा अच्छि-द्रांजोरूपसन्तनिषु *आचतुर्थकृष्टं तु पादान्ते* इह वाचि-सर्वमोभवतीत्यत्राविशेषोदाहरणात् ग्रहणात्। आकृष्टचतुर्थं तु यदि पदान्ते भवति ततः सर्वमोभवति। ओभावा-धिकारोऽनुवर्त्तते उदाहरणं बृहतीज्यायास्सु श्रुधीहवायां च। सर्वासु वारवन्तीये *मन्द्रकृष्टं चामन्द्रकृष्टं च* ओभवति। आमन्द्रकृष्टं च सर्वत्र। यथा दायोदादीनि। मन्द्रकृष्टे वार्त्तोहा-दीनि अमन्द्रकृष्टे *वृधेऽयंजनानाः सनित्यइत्येभ्यः परो-ऽभ्यासश्चैकं* एदुमधोस्तृतीयायां न्यशब्दे आकारोऽभ्या-सः। एनातृतीयायां नाशब्दे अकारोऽभ्यासः। आग्नेरायाग-

भ्यः परोभ्यासश्चैदैव्य औणायवयोरो भवति यकारे सानौशब्दश्च सर्वत्राकारे बोधीयनिधने च घोषे ॥ २ ॥

श्रीक्रौंचप्रमशात्यसंजयभरक्रंदाभिकार्णश्रवश्यैता· कूप विशोविभीशकुभस्वारपर्णश्वादिव्वायास्य द्विनिकाण्वकार्तयवश्यावाश्वयश्वेषु वज्ञेया मध्यसम· न्वितानिधनंहीष्येषुयासामसु ॥ ३ ॥

न्त्यशब्दे यकाराभ्यासः तेषामभ्यासानामोभवति । तदेतत्पुनरुक्तं, दैव्यआकाराकारयकाराराभ्यासएना तयोऽग्निमितिनिधने च नि- त्यमात्वमितिसिद्धत्वात् *अर्णायवयोरोभवतियकारे* अर्णायव- योस्त्वोभवति यकारे प्रत्यये । इदमपि च पुनरुक्तमेव *सानौ- शब्दश्च सर्वत्राकारे । *सानौशब्दश्च सर्वत्र ओभवति अकारे प्रत्यये । नौशब्दश्च सर्वत्राकारेओभवतीति सिद्धमेतत् । तस्मा- दिदमपि पुनरुक्तमेव । उदाहरणं वृषापवित्रेअधिसानोअव्ये *बोधीयेनिधने च घोषे* बोधीयानिधानेषु च घोषे प्रत्यये च तुडा शब्दः घोष एव विशेषणं नोपपद्यत इति चेत् । आह । दर्शनार्थमेतदुच्यते । घोषप्रत्यये ओभवतीति । यथा अभिघोषे- प्रजयज्य इति । अथवा विप्रतिपत्तेर्नियमार्थं । घोष एव प्रत्य- ये ओभवतीति नघोष इति । कथं विप्रतिपत्तिरिति । उच्यते । ऊर्द्धं व्यंजनादिशाटविश्लिष्टमुपेषुरित्येवमारभ्यते ।

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये दशमस्य

द्वितीया कण्डिका ।

*श्रीक्रौंचप्रमशात्यसंजयभरक्रंदाभिकार्णश्रव श्यैताकूपवि- शोविभीशककुभस्वापर्णश्वादिव्वयायास्य द्विनिधनकाण्वकार्तय- यवश्यावाश्वेषु च ज्ञेया मध्यसमन्वितानिधनंहीष्येषुयासामसु* एषुसामसु याहीषी साप्येसामानिधनंभवति । ततः किं । उ-

इयैतेतृतीयादिन्याऔहोवायाः परं तृतीयं नीचं नतदिप्रांत्ययो र्बृहतिचद्रासाद्दितीयेकं सर्वत्रा दर्शभ्यमच प्रथमतृतीयइदययंयीसूचा कूस्तावतृतीयंनीचमा-

ख्यते । तालव्यमाइ आयिप्राप्तस्यनिधनेहीषीस्थामितिनिषिद्धस्य प्रतिप्रसवार्थम् ।

इति उपाध्यायजातशत्रुकृते पुष्पसूत्रभाष्ये दशमस्य तृतीया कण्डिका ।

*इयैते तृतीयादिन्याअहोवायाः परं तृतीयं नीचं* इयैतेतृतीयादिन्या अहोवायाः परं यत्पर्व तत्र तृतीयमक्षरं नीचं भवति । द्वितीये स्वरे भवतीत्यर्थः । तृतीयादिन्या इति विशेषणं मन्द्रस्वरादौ होवाङ्निधनार्द्वविद्यत इत्यतोविशिष्यते । तृतीयादिन्या इति । *न तदिप्रान्त्ययोः* पूर्वलक्षणप्राप्तस्यापवादः । तदिदाइयैते प्रथमान्त्ययोः स्तोत्रीययोः द्वितीयस्याक्षरस्य नीचीभावो न तृतीयस्य *बृहति च द्रासाद्वितीये कं सर्वत्र* बृहति च द्रासात्पर्वणः पुरस्ताद्द्वितीये स्वरे एकाक्षरं सर्वत्र भवति । कतमस्य द्वितीयस्वरापत्तिरिति । द्वितीयस्येति ब्रूमः । कुतः । नतदिप्रान्त्ययोरितिद्वितीयाधिकारात् । *अदर्शभ्यमच* । सोमाः पवन्तायां बृहति उत्तरयोः स्तोत्रीययोरपवादः तृतीयं नीचं भवतीत्यर्थः । सूरासोनदर्श इषमस्मभ्यमच । *प्रथमतृतीयइदपयसीसूच इदययंयीसूचेतिपाठः *द्रासात्परस्यैव पर्वणः अयं विशेष उच्यते । प्रथमस्वरात्तृतीयस्वरे भवति । प्रथमस्वरस्य तृतीयस्वरापत्तिर्भवतीत्यर्थः । एकाक्षराण्युदाहरणानि । इकारः मत्स्यबृहति प्रथमायां । वृषातेयष्ण इति इकारः । किपितेविष्णविति प्रथमायां अस्पष्टग्रहणतत् । पदेदकारः । अत्रैव द्वितीयायां तव्पाहयं यशब्दः । अत्रैव तृतीयायां गिरोमे यूयं

द्यामाद्यायां मध्यमायां तमसेचांधा।द्वितीयेनकंसर्वत्रायो-
नौ प्रथमेदे स्तोभेचोत्तरेवकार ओ भवत्यत्वे हिष्ठियगव-
वसितेषु सचपवृत्सर्वत्रांत्यमयोनौ वसुचद्वितीया दसु
तिथेचतृतीयेप्रथमंयोनौ जयेचस्तावांत्यमयोनौ ॥ ४ ॥

---

यंकारः । सहस्रधारायां सोमस्य तीरायीयीकारः । सुकारः सदुद्र-
वायां बृहत्येव सुशर्मा ~~वसु~~ *आकूस्तावच तृतीयंनीचमाद्यायां*
आकूपारआद्यायां स्तोत्रीयायां तृतीयमक्षरं नीचं भवति *आद्यंमध्य-
मायां *मध्यमायां स्तोत्रीयायां आकूपारे प्रस्तावाद्यस्य नीचीभा-
वः *तमसेचान्ध।द्वितीयेनेकंसर्वत्राऽयोनौप्रथमेदे* सहोदैर्घतम-
से धात्पर्वणः परस्तात् आन्धात्परस्तादित्यर्थः । द्वितीयस्वरे अने-
कमक्षरं सर्वत्र भवति प्रथमेपादे अयोनौ योनिवर्जमित्यर्थः । अने-
काक्षराभावात् यस्तेबोधीये श्रुधीहवायां सर्वासुएवमादीन्युदाह-
रणानि । *स्तोभेचोत्तरेवकारओभवति अत्वे उत्तरे च *सःस्तो-
भेचकार आभवति । किं सर्वत्र ! न, अर्थे । किमुक्तंभवति । यस्य
वर्णस्य आत्वं रूपं तस्मिन्नवमान्तेवर्णेप्रत्ययभूत इत्यर्थः । यथानर्द-
वायां वशब्दस्योत्वं भवति *हिष्ठीयगवासितेषु सचपवृत्सर्वत्रा-
त्रान्त्यमयोनौ *यद्वा।हिष्ठीये पूर्वं अपगव अनुष्टभासितेषुयथासं-
ख्येनसप्तमचतुर्थपञ्चमेषुपर्वसुचान्त्यमक्षरं वृद्धंभवति । यथाहिष्ठी-
यसप्तमेपर्वन्यन्तस्थाक्षरस्य वृद्धिः एवमेवपरयोः *वसुचाद्वितीयाद्*
त्रैककुभेद्वितीयात्स्वरात्परः वशब्दो वर्द्धतो । वासुमर्ता३या ।
*असु* अत्रवसु शब्दोनवर्द्धते *तिथेच तृतीयेप्रथमयोनौ *देवा
तिथे च तृतीये पादे थममक्षरं वर्द्धतेयोनौ *जयेचस्तावान्त्याम-
मयोनौ*असअयेच प्रस्तावान्त्यमक्षरं वर्द्धत अयोनौ ।

इति उपाध्यायाजातशत्रु कृते पुष्पभाष्येदशमस्य
चतुर्थीकण्डिका ।

क्रौंचेदेचमात्प्रथमोच्चम सूरासो येचतृतीयाद्रुष्णा-
त्तृतीयं नप्रसो श्रवसआयिंद्राताज्जे निलोप उताद्विषाया-
श्चाद्यश्रवाऽऽयाश्च सेधेतुप्रत्नंपीयूषाद्यायाऽऽसत्राद्यस्यलो-

---

*क्रौञ्चेदेदेचमात्प्रथमोच्चम्* आष्टमिकेक्रौंच पादे पञ्चमादक्ष-
रात्परस्तात्प्रथममुच्चम्भवति । प्रथमतृतीयेषु पादेषु षष्ठमक्षर-
मुच्चं भवतीत्यर्थः *असूरासः *अकारः प्रतिषेधार्थः ।
सूरासोनदर्शतासः इत्यत्र सप्तममक्षरमुच्चँभवति *येचतृतीयाद्रु-
ष्णात् तृतीयं *जराबोधीये तृतीयात्पर्वणः परस्ताच्चतुर्थे पर्वणि-
तृतीयमक्षरमुच्चं भवति *नप्रसो* प्रसोमयाहीत्यत्र बोधीये चतुर्थे
पर्वणि तृतीयस्योच्चभावप्रतिषेधः अत्र तु द्वितीयमक्षरं भवति
*श्रवस आइन्द्रातज्जनिलोपः *नौरश्रवमे योनौ तृतीये पादे च-
त्वारि पर्वाणि आइन्द्रात्ताजनित उताद्विषाशवाच आ २ स्मा २
कथुमा २ घा २ वानू २ पुस २ तत्र ऊहगीतौ आइन्द्रान्तात्पर्व-
णः परस्ताज्जनिलोपोभवति सखायोदीपत्रतृतीये पाद परो २ दू-
मास्या इदा २ ता २ पिस २ ता २ त्रीणिपर्वाणि भवन्तीत्य-
र्थः। *उताद्विषायाश्चाद्यं* धयावा उताद्विषातस्याआद्यमक्षरं लुप्यते
अक्षराभवतीत्यर्थः। *श्रवायाश्च* अद्यमक्षरं लुप्यते। ता इसू २
ताः २ । यत्र चत्वारि पर्वाण्यभिधीयन्तेतेषां कथमिति ? ऊहगाने
योनिवत्स्वरास्तोभाभ्यासोवरामा इति योनिवदेव चत्वारि पर्वा-
णि प्राप्नुवन्तिअल्पाक्षराणि भवन्ति। कनीयास्यादिनोलोप इति
वचनात्। *सेधे तुप्रत्नंपीयूषाद्यायाऽऽ सत्राद्यस्यलोपः* उत्सेधे तु
प्रत्नपीयूषायां सत्राहणामित्याद्यसाम्नि यः संघातस्तस्य संघात-
स्याद्यं यदक्षरं तल्लुप्यते *कृतिनि तृतीये दे सर्वत्र रम्यते *सं-
कृतिनि ऊहगीतौ बृहतीषु गीयमानस्य तृतीये पादे विरामोभव-
ति । *नुष्टुप्द्वितीये व* । अनुष्टुभि गीयमानस्य संकृतिनि

पःकृतिनितृतीयेदेसर्वत्ररम्यते नुष्टप्‌द्वितीयेच-षभेच प्राक्‌चतुर्णष्वयोनात्रोमितिचनीचः स्वेतृतीयेपतृषद्वर-एकर्चेद्व दसंज्ञीयेहाराद्योनिव दविशोत्तमायां सोमा-

---

द्वितीये पादे विरामोभवति *षभेच* शाक्‌ रर्षभे च अनुष्टु-भि गीयमाने द्वितीये पादे विरामोभवति । पवस्व वाजेत्यत्र पा-दस्यानुष्टुप्सु द्वितीयं पादं द्वैधं ऽपूहेदित्येतदुक्तं भवति *प्राक्-चतुर्णष्वय मोनात्रोमिति चनीचः* प्रागुक्तं द्वितीये पादे तृतीये पादे तृतीये रम्यत इति । स विरामः कथं भवति । आह प्राक्-चतुर्थवर्णेषु स विरामो भवति द्वादशाक्षरे । अष्टाक्षरे वा ऽपि-ति । एतच्च प्राक्‌चतुर्षुवर्णेषु भवति पादत्वादेतयोः साम्नोः योऽइत्वसम्पादनार्थमिदमारभ्येते । अयोनत्वे तदेव योनौ तु प-श्च दैस्वादोरित्येति । अथवा प्राक्‌चतुर्णष्वोमिति एवमन्तंसूत्रं । प्राक्चतुर्षु निधनेषु शंयोः हविः सुवः ज्योतिरिति । एतेषुप्रागो-कारोभवति । त्रिनीचः । एवं पाठः । वाचिपत्पयेऽमित्येतत्‌ नीचं भवति *नीचःश्च तृतीयेपनृषद्वरं *अयोनात्वित्यधिकारः।त्रैपक्षाये निवन्तं तृतीये पादे तृतीयमक्षरं नीचं भवति । षष्टमपरं च षत्र-रोते च नीचंभवतः । पष्टसप्तमम्‌ इत्यर्थः । *एकर्चेद्वे *एकर्चे-वैयश्वेपुनानायां तृतीये पादे त्रयाणामुद्दिष्टानां तृतीये षष्ठसम-प्रमानां पूर्वे नीचेभवतः । तृतीये षष्ठे इत्यर्थः । *दसंज्ञीयेहाराद्यो-निवत्* त्रैच्छन्दसे यज्ञायज्ञीये आद्ययोः प्रतिहारात्परं यत्पर्वं तद्योतिवद्भवति । अष्टाक्षरं भवतीत्यर्थः । सिद्धारंभौविशेषविवक्ष-या *अविशोत्तमायां सोमाद्ययोश्च* विशोत्तमायां यज्ञायज्ञीये सोमःपवतेजनितायां ज्ञीये आद्ययोः स्तोत्रीययोः प्रतिहारात्पर-स्य पर्वणोनिवद्भावप्रतिषेधः *अग्नये जास्वरं बृहत्‌ बृहदा-ग्नेये जास्वरस्य वृद्धिः सिद्धोपन्यासोविशेषार्थः । *नत्रिछंदःसु*

यथोश्चाग्नेयेजास्वरंवृन्नाविंछदःसु प्रहूयसायाश्चद्व्यक्षर-
मवृ द्वादिस्तनिपार्श्वयोर्यथर्चं॰सर्वत्रा ऽस्तावहारयोरव-

---

वृहदाग्नेये जास्वरस्य वृद्धिप्रतिषेधः । अग्निनरायां । आग्ने-
यजास्वरस्य वृद्धिप्रतिषेधः *प्रहूयसायाश्चद्व्यक्षरमवृत् *त-
स्मिन्नेव वछंदसे वृहदाग्नेय प्राहुयसाआद्यं । द्व्यक्षरं अवृद्धं भवति
अग्निनरायामेव । आदिस्तनिपार्श्वयोर्यथर्चं॰ सर्वत्र* पादादिः
संतनि गायत्रपार्श्वयोः सर्वत्र सर्वर्क्षु यथर्चं भवति* अस्तावहार-
योरव॰येहिस्तोमसुमरामरा जीचारे* अकारः प्रतिषेधार्थः ।
पदादेर्वक्ष्यमाणेषूदाहरणेषु यथर्चाभावः । उदाहरणानि । अव-
श्येहि स्तोमं सुमाराः मामराशजी । एकाक्षराण्युदाहरणानि ।
यथा संख्येन अकारादीन्युदाहरिष्यामः । अकारः अभिसोमायां
प्रस्तावे संतनिति गायत्रपार्श्वयोः इयोन्द्रामतृतायां च संतनि नि
अस्माव प्रतिहारे विकारः । वयं॰हाउ श्येतोहाउ । हिन्वेहाउस्तोतूर्हा-
उ । मन्स्याहाउसुत्वाहाउ । सन्तानिनिगात्रपार्श्वे प्रस्तावे मत्स-
रासः । राजादेवः । प्रतिहारे प्रहिन्वानः । प्रतिहारेएव । मधो-
नामक्षरथेनपादमिति च । एतानि गायत्रपार्श्वे प्रतिहारे जीराः
संतानिति प्रतिहारे । *भचकारांतक्रांतमयोर्नो* शाक्करर्षभे च
अकारांतं यत्प्रत्युत्क्रान्तं भवति । योनिव । उदाहरणानिजं ।
पप्रवएत्राएधा२ पाएथोएवाएश्वा२ एवाएमानाएमहाएत्वना ३ ।
उदूहः सर्वत्र *द्व्यक्षतरमुच्चमुच्चमुइहइसनेन लक्षणेन । येषु
सामसु उदाहःप्राप्नोति तेषु उदूहः सर्वत्र कार्यं इति सिद्धोप-
न्यासः विशेषविवक्षया *अमीढे* । पौरुमीढेत्वमंगादिषु उ-
दूहा न भवति । च प्राकतुर्णोष्वेतस्मिन्सूत्रे द्वितीयेपि वर्ण-
नअनेनाभ्युपायेन स्तोभानुसंहारएवोपदिश्यते । प्राकतुर्षु निध-
नेषु अभिमितिस्तोभः निधने प्रत्ययभूते कर्त्तव्य इत्यर्थः *गते-

श्रृध्येहिस्तोमस्तुमरः प्रमराजीचरे भेचाकारांतकांतमयोना
वुदूहः सर्वत्रा मीढे गतेश्च कनीयस्यत्वमोकारस्य कृ-
तलेयेत्वं पदगीतिस्त्वसिद्धत्वात् ॥ ५ ॥

श्रुध्येस्तावेतुरीयेष्यतेसर्वत्र संवत्सायांतु तृतीये
गोमन्नश्च मरुतामिन्द्राᳲस्वासूत्तमायां धसेचतुर्थाद्यंयो-

---

श्चकनीयश्च स्यत्वं* इंद्रायेन्द्रायां क्रौंच उगतेः अत्वं भवति ।
किपविशेषेण । न । कनीयसि वर्णे प्रत्ययभूते । अकारस्य प्रत्य-
यभूते कथमोकारस्य कनीयस्त्वमिति । उच्यते । संध्यायश्च त्रिव-
र्णस्त्रिकालोभवतीतिवचनात् *ओकारस्यकृतलेयेत्वं* ओ-
कारस्य हाविष्कृतकालेययोः अत्वं भवति । त्वं सुष्वाणो-
हाविष्कृते । तुभ्येत्सोविमासोकालेये *पदगीतिस्त्वसिद्धत्वात्*
तुशब्दः पक्षव्यावृत्तये । यदुक्तं कृतलेयेअत्वमिति, तत्
कस्मात् । असिद्धत्वात् । किमुक्तंभवति । उच्यते । अत्वमध्येऽ-
ग्रहणादित्यर्थः । तस्मात्पदगीतमेव नात्वमिति ।

इति अजातशत्रुकृते पुष्पसूत्रभाष्ये दशमस्य पञ्चमी काण्डिका ॥

*श्रुध्येस्तावे तुरीये ष्यते सर्वत्र* श्रुध्येप्रस्तावे चतुर्थमक्षरं
कृष्यते सर्वत्र सर्वक्षु *संवत्सायान्तु तृतीये* संवत्सायान्तु श्रुध्ये-
तृतीये अक्षरे कर्षणं भवति प्रस्ताव एव *गोमन्नश्च* गोमनायां
च श्रुध्ये प्रस्तावे तृतीयमक्षरं कृष्यते । उत्सर्गाच्चतुर्थस्य कर्षः
प्राप्तः । एतयोः सूत्रयोरपवादः *मरुतामिन्द्राᳲ स्वासूत्तमायां*
मरुतां योनौ स्वासूत्तमायां प्रस्तावे इंद्रामापद्यते । इंद्रायसोमसुषु-
तः परिस्रवाद्वितीयेइंद्रासाउत्तमायामापद्यते । मध्यमायामप्यविशि-
ष्टेतिचेत् । न । मध्यमायां चतुर्थे स्वरएकमक्षरंतिष्ठन् इत्येष
विशेषः *धसेचतुर्थाद्यंयोनिवत्* नौधसे चतुर्थाक्षस्य आद्यमक्षरं

निवद्धमायाः स्तावे द्वितीयं घातः रुणसाम्न्याद्या-
न्त्ययोस्तु विकारो नार्मेधेधात्याद्ययोः पाहुपामापद्य-
ते थमोच्चः षभइविम जनेचभु लंवि हिंमित्सिचवरुपृ-

पोनिवद्धवति । तांवोदस्ममृतीषा २ हां ३ एतच्चतुर्थोच्चं तदेतत्सूत्रं
समानमिव सर्वत्राव्यभिचारात् । अथवा धसेचतुर्थाद्यंपोनिवव ।
चतुर्थोच्चादन्यद्यथर्चं भवति । प्रथमोच्चे आद्यमक्षरं सर्वत्र यथर्चं
भवतीत्यर्थः । वात्सत्रस्वसरां२ एतत् प्रथमोच्चं । एवमल्पसारमेव
व्यभिचारात् *ध्यमायां स्तावे द्वितीयं घातः रुणसाम्नि *ज्यो-
तिर्वरुणसाम्नि च मध्यमायां प्रस्तावे द्वितीयमक्षरं निहन्यते । मंद्रं
भवतीत्यर्थः । अभिक्रदंवित्यर्थ *आद्यांत्ययोरस्तुविकारः* ज्यो-
तिर्वरुणसाम्नि च आद्यांत्ययोः स्तोत्रीययोः प्रस्तावएव विकारो-
भवति । एतयोश्चतुर्थस्वरे बहुन्यक्षराणि भवन्ति इत्येष विशेषः
*नार्मेधेधाद्याद्ययोः पाहुपामाद्यते* अथाहंनार्मेधे आद्ययोः स्तो-
त्रीययोः पाहो २ उनाद्वितीयायां एषापाहि । अथाद्याद्ययोः उपामा-
पद्यते । उपात्वाका उभे अप्येते पर्वणी स्तत्रसिद्धे नाऽन्यत्र-
न्यत्र संव्यवहारोस्ति *थमोच्चःषभइविम* वैराजर्षभे प्रथमोच्च-
मिति प्रथमे स्वरे उच्चत्वस्यापेक्षितत्वात् । अभिस्वारमपेक्ष्य मंद्र
उच्चः । मंद्रमपेक्ष्यचतुर्थउच्चः । चतुर्थमपेक्ष्य तृतीय उच्चः
तृतीयमेपक्ष्य द्वितीयउच्चः । इत्यतोविशेषणमुपपन्नं प्रथमे स्वरे
उच्चं नान्यस्मान्निति । एकाक्षराण्युदाहरणानि त्रिम म ।
इंद्रमदन्तुत्वा । विपिपानस्य । मघवन्ज्योक् च इति *जनेचभु*
राजने च प्रथमे स्वरे उच्चं भवति । भुशब्दभुवनेषुज्येष्टम् *लं-
विहिंमित्सिचवरुपृष्णिस्यैतमन्नेषु* एकाक्षराण्युदाहरणानि यथासं-
ख्येन लंभतु साम्नि । रयि पिशंगं बहुलं विः पृश्निनि । सोमोय-

ष्णिणश्यैतमद्रेषु ष्टंभेचौशसूये शीयेचनाकृद्दं१ह यशसि-
कृष्टादेकं ध्यमायामकारोद्वितीय१ संमिश्लःसुरूपे प-
दगीत३ष्टये हकारे च ककारश्चोभवतिमरायेद्विमात्रः

---

उक्त मऽं१हवि: । स्मिनृश्यैते । शिक्षाणोस्मिन् । सि । पौरुमद्रे ।
अपोवसानोअर्षसि । अन्यत्रैतेषु सामसु एषां पर्वणां योनिवद्धा-
वादंसमक्षरं नीचं भवतीति *ष्टुम्भेचौशसूये* महावैष्टंभेच-
३श सूये । एकाक्षराण्युदाहरणानि । योनिवद्धावान्नीचत्वे
प्राप्त उच्चीभावोपदेशः । कदासुत तृषाण३ । त्वयावयंप्रवतः शन-
त्वावाजिन्त्सहस्रऽं१स्व समुद्रस्याधिविष्टपे *शीयेचनाकृदऽं१हत्*
सदोविशीये च प्रथमे स्वरे उच्चंभवति अधिकारात् । एकाक्ष-
राण्युदाहरणानि । नाकृद्दहव । इमे चविश्वाभुवना । पवमध्ये
गृह्यते । वैच्छंदस्तत्वाव । असिसत्यईशानकृव । एवमन्तेमध्यमर्द ।
राजादेवकृतं बृहत *यशासिकृष्टादेकं* इन्द्रस्य यशसि कृष्टादेक-
मक्षरं द्वितीयस्वरं उच्चं भवति । आद्यन्तयोस्त्वं वृत्राणि हऽं१शिब्दात्
कृष्टाव,हऽं१ञब्दोतीये स्वरेउच्चोभवति । महीवकृतिशब्दातृकृत्तिश-
ब्दः द्वितीय उच्चोभवति । सिद्धोपन्यासोविशेषार्थः *ध्यमायामका-
रोद्वितीय* मध्यमायां तु स्तोत्रीयायां कृष्टात्परः द्वितीयं स्वर
मकारश्च भवति । तउच्चनूनमद्वितीयं द्वे अक्षरे भवत इत्यर्थः
*संमिश्लः सुरूप पदगीत३ष्ट्यो *संमिश्लः सुरूपेपदगीतोभवति ।
३ष्टुये प्रत्ययभूते आद्ये तु सुरूपे अनोद्येप्रत्ययत्वात् संध्यगीत
एव *हकारेच ककारश्चोभवति मराये द्विमात्रः *मरायेचककार
३भवति । हकारे प्रत्यये द्विमात्रः । ननु ह्रस्वः कोउहादाउहाउ-
हाउवेति *गोष्ठेषु *गोष्ठेषु परीतोत्पान्तिथुञः कारअभवति ।
किमुक्तं भवति यस्यामृचि गोष्ठुउदयमस्तस्यामृचि अकारअभवति

ष्ठेष्व:कार: तरायेषुल्यते नौवरुणसाम्नि द्वितीयेलां-
देथमोचमऊभति चतुर्थेतुवृणीजास्वरः सर्वत्र कांपाच-

---

गोष्ठानीति बहुवचनं छात्रिन्यायेनवाआर्षेयांतरवोद्धारशालावत् तथा
च सामतंत्रेऽपिभाष्यं गोष्ठेषु प्रति मानविधिरिति । तस्मात्प-
रीतोषिचतासुनमिति प्राप्ते अःकारः सर्वसामसु ऊभवति । तोषिं
इदश्वरूपग्रहणम् । परीतोषिंचतायामेतदुक्तं भवति, ऊभावश्चा-
त्राधिकारात् *तरायेषुल्यते* असम्बद्धमिदं । एकाक्षराराण्युदाहर-
णानि । तशब्दः जातंरितंतिमातरः । राशब्दः । राजने । येशब्दः
उन्नये । एतेषुतरोतरः । राजन उन्नयेषु अःकारोलुप्यते कथंतरो-
तर इत्यत्र रइतिप्राप्नोति । ऊष्मा चपरसंस्थानमापद्यते ।
इतिलक्षणात्तस्य अकारस्य लोपोभवति । ततोवचनांतरेणऊत्वं
भवति । अदेस्त । तथाराजनेवागीडामूत्रोबहद्भाइति अकारएव
प्राप्नोति । प्रकृतत्वात् । आत्राप्योभावोवाचनिकः । राजने च स्व-
शब्दऊभवतीति । उन्नये च अहोरात्रण्यरित्राणीतिप्राप्नोति रेफश्च-
तुल्यस्थाने लुप्यते । अत्रापिवाचनिकएवऊभावः उन्नयेसमास-
त्वाददिति । एवमेतेषुदाहरणेषु अकारोलक्षणप्राप्तोलुप्यतइति ।
अथवा अपरा व्याख्या योगतराणिएषएतेषु भावः प्राप्यतइति
वर्णयितव्यं *नौवरुणसाम्नि* योनौ च वारुणसाम्नि
अःकार ऊभवति । अधिकारात् । प्रमित्रायांवचआ *द्वितीये
लांदेथमोचमक्षति* इलांदेद्वितीये तु गाने प्रथमे स्वरे
उत्वं भवति । एकाक्षराण्युदाहरणानि । ऊति अकारः । अग्ने-
तव । ऊकारः । ऊर्जनपा । तकारः तिर्पदस्य *चतुर्थेतु
वृणीजास्वरऽं सर्वत्र* तस्मिन्नेव इलांदे चतुर्थे अनुगाने वृणी-
जास्वरमापद्यते । पावकवर्चाः शुक्रवर्चाइति । एवमादीन्युदा-

यतेनयताविघ्नेरेच देदेचाविधाः सर्वत्रा योनौ जास्व-
रं श्रमनसेचद्विषस्वमनसेचद्विषः ॥ ६ ॥
अप्सुषडंतेरक्षाष्कारणिधनवदुपान्त्ये भिरायवा

हरणानि । योनौ इन्द्रंनरायांवृणीइहजास्वरमापद्यते *कांपा-
लुप्यते* तस्मिन्नेव चतुर्थेऽनु गाने योनिवद्दृष्टा कांपा लुप्यते ।
पात्रकृत्वर्चादीन्येवोदाहरणानि *नयताविनिरेच* नकारः
प्रतिषेधार्थः । वक्ष्यमाणेषूदाहरणेषु कांपा नलुप्यते इत्यर्थः ।
एकाक्षराणिपंचोदाहरणानि । याताविघ्नैरै । यकारः ईयासी-
भानुना । ताशब्दः आतावोनंमही । विकारः पांदाईश्वादर्शनां ।
घ्निकारः । आघ्नीयसून्नायदारे । शब्दः धाईरेपुरोजनाः *देदेचा-
विधाः सर्वत्र* तस्मिन्नेव इलान्दे पदे पंचाक्षराविधा
सर्वत्र भवति । अग्नेतवश्रएवमादीनि । तथा च बृहद्भानोशएवमा-
दीनि *अयोनौ* । योनिवर्जमित्यर्थः । योनौतुपादिका पञ्च
विधाभवति । अभ्यानुगानवर्जम् अग्निरश्मिपात्यग्निः इन्द्रंनर इति
च एतेष्वनुगानेषु पादिकाविधाः *जास्वरंश्रमनसेचाद्विषः*
वैश्वमनसे च पवस्वादेवायांयोनिदृष्टायास्वरः द्विषः स्वरोभवति ।
अतिद्विषः । सुनीथोघ्यासमर्त्यइत्यत्र अतिद्विषः ।

इति उपाध्यायाजातशत्रुकृते पुष्पभाष्ये दशमस्य षष्ठीकंडिका ॥

*अप्सुषडांतेरक्षाष्कारणिधनवत्* त्रिष्टुप्सु वषट्कार-
णिधने विधुंदद्रायां रक्षाआष्कारणिधनवद्भवति वहूनां मनेबहूनां
*उपान्त्येभिरायवा* प्रतिस्तोत्रीयं उपांत्ये पादे अभ्यासवि-
षयेभिरायवा भवति । इतरेषु पादेषु व्यभिचारदर्शनात्सिद्धोपन्या-
सः । इतरथा योनिवद्भावात्सर्वपादंभिरायवाप्राप्नोति *अन्यत्र
सुताद्यलुप्ता* अन्येषु पादेषु सुता भवति । आद्येलुप्तासुता ।

ऽन्यत्रस्तुताद्यलुप्ता पञ्चाक्षरश्चाभ्यासः क्वाया? राजेऽध्यमायांपाष्टे वृ दाद्यायांचान्त्यस्यतमसेस्वासूत्तरयोर्वृणीतिरुतेचतुरक्षरे नाभ्यासे नरायेहा उवाद्वितीयात्सकृत्कृष्टा दांत्याविधाः सर्वत्रस्वासूत्तमायां प्रथमेदे मूर्द्ध-

---

कदावसोद्वितीये । दीर्घा ३ अहो वासुता । एषास्तुता ह्यक्षरा आद्यलुप्ता भवति *पंचाक्षरश्चाभ्यासः* अर्थात्तृतीये । तृतीये पादे पंचाक्षरअभ्यासोभवति *क्वायांराजेऽध्यमायां* अक्वायां सामराजे मध्यमायां स्तोत्रीयायां पंचमाष्टमे अष्टमे पादे पादे वृद्धे भवतः । योनौसप्तमाष्टमयोर्वृद्धिरित्यतोवचनम् मतेधाराइत्यत्रा । *आद्यायां चान्त्यस्य *आद्यायां स्तोत्रीयायां अन्त्यस्य पादस्य पंचमाष्टमे वृद्धे भवतः* तमसेस्वासूत्तरयोर्वृणीतरुतचतुरक्षरे*सहो दैर्घतमसे पित्रासोमायां उत्तरयोः स्तोत्रीययोः वृणा च तरुणा वृणीतरुते चतुरक्षरेभवतः । सत्वामिन्द्रा ३ मभूत्साउ । इमाब्रह्मासम्मसदाई । एवंचतुरक्षरेकर्त्तव्ये । आद्यायामप्यत्रमिति चेत् । न । योनेच विचार्यत्वात् । योन्यन्तरापेक्षं चैतद्वचनं स्यात् । अथवा ऊहकारेण सह विकल्पः *नाभ्यासे *उत्तरयोरेव स्तोत्रीययोः अभ्यासविषये अक्षरैव ऽप्यक्षरैव तरुणाभवति न चतुरक्षरा *मरायेहाउवाद्वितीयात्सकृत्कृष्टा* मराये हाउवासामान्ते द्वितीयात्स्वरादारभ्य सकृत्कृष्टा भवति उपाषत्वादस्याः उदूहप्रतिषेधः प्रागुपायादितिमाप्ते वचनं *दांत्या विधाः सर्वत्रस्वासूत्तमायां प्रथमे दे* पुनरुक्तमिदंसूत्रं *मूर्द्धन्यएव दंत्यः स्वरोपधः*दंत्यः विरामेपि, मूर्द्धन्य एव भवति । किमविशेषेण । न । यदि दन्त्ये भवति स्वरपूर्व इत्यर्थः । कस्मिन्प्राप्त इदमारभ्यते । उच्यते । एकपदे रेफात्तकारोमूर्द्धन्य माप्यते इति ।

न्यएवदन्त्यः स्वरोपधो णश्चयोतिहारीस्यादविकृतपूर्व-

---

ऊचानामेकपदे मूर्द्धन्य एवेतिवचनं । तथार्षाभ्यामित्यत्र एकपद एव ऋकारषाकाराभ्यां परस्य मूर्द्धन्यापत्तिरितिवचनानि उदाहरणानि । जराबोधीये उरुकृदुरुणः अयं नकारः विरामे मूर्द्धन्य एव भवति तथा मानवे आद्ये शिक्षाणो आद्या । तथा नौधसएतदेवोदाहरणं । साशा इक्षाणो अस्मिक्षाणो आ तथापार्थवासिष्ठयोः । इंद्रायसोमाइ३परिषाइत्यत्र पूर्वयो रुदाहरणयोः सᳪहितकालेयेन णत्वं प्राप्नोति नानापदत्वादिति । उच्यते । सत्यं न प्राप्नोति । किं तर्हि भाष्यकारेण अक्षरचोद्येन प्रापितं । कथं । अत्र किल पादे मूर्द्धन्य इति वक्तव्ये तथार्षभ्यामितवक्तव्ये एवमक्षरचोद्येन नानापदेपि प्रापितं । तत्र च उदाहृतानि येमानाः अर्वाङ्गः । उरुकृदुरुणः । स्वर्णयस्तेश्रृङ्गवृषोणपात् । एवं क्वचित् मूर्द्धन्यापत्तिः सᳪहितायामप्युक्तेऽपि न दोषः । प्रत्युदाहरणानि । एवं तावद्दीर्घतमसोर्केनृभिर्येमाणो हर्यतो विचक्षणः क्षण अयंविसर्जनीयोपधानस्वरोपरोधः तस्मादमूर्धन्यापत्तिर्न भवति । इंद्राय सोमंपरिषिच्यमान इत्यत्र तु समासपदत्वात्संहिताकाले मूर्द्धन्यापत्तिरेवेति *णश्चयोऽतिहारीस्यादविकृतपूर्वपदवत्* णकारश्च यः अतिहारी स्यात् अतिहारयोगादतिहारी अविकृतपूर्वपदवद्भवति । समासपदवद्भवति इति यथा उत्तरे मानवे सुतेष्विन्द्रगिर्वण इति णकार एव भवति । अतिहारयोगः कथमिति । उच्यते । गिर्वणस्त्वया भूपन्ति मानव इति *परिष्कृते चागमोलोप्यः* परिष्कृते चामामिकः सकारोलुप्यत इति । परिष्कृत इति किमुक्तंभवति । उच्यते । परिष्कृतं शोभनं भूषितं अलंकृतमित्यर्थः । स्तोभेन च सामर्थ्यं रक्षितंकृतं भवति ।

पदव त्परिष्कृतेचागमोलोप्यः ॥७॥

कार्णश्रवसोत्तरयोर्ण्ये स्वदयसदावृधां दस्म८सुरा-
क्रौंचेस्त्रभानहिवामग्निर्वोत्राजीयउपांत्यकृष्ट८ सर्वासु-

अलंकृतं भूषितं दर्शनात् । प्रकृत्यैव साम सुशोभनं तदनुसंहृतस्तो-
भं वर्णवत् तथा च परिष्कृतः । संस्तुत इत्यर्थः । किमुक्तं
भवति । स्तोभः परिष्करणं अलंकार इत्यर्थः । तस्मिन्परिष्कर-
णे परिष्कृतस्तोभे आगमः आगमिकः सकारः स लोप्यः ।
यथाहरिश्चंद्रइत्यत्र वाभ्रवेसमासः । ऋक्षुचंद्रइति अस्य सकारस्य
स्तोभेसतिलोपो भवति । हाराइहाइवान्द्रो इति ।

इति उपाध्यायाजातशत्रुकृते पुष्पभाष्ये दशमप्रपाठकस्य
सप्तमी कंडिका ।

*कार्णश्रवसोत्तरयोर्ण्ये *स्वदयासदावृधाम् *कार्णश्रवसे
उत्तरयोः स्तोत्रीययोर्ण्येस्वदयायोनिदृष्टा सदावृद्धामापद्यते
*दस्म८सुराक्रौंचस्त्रभानेहिवा* दस्मंतंवोदस्मांसुराअभिप्रव-
स्सुरा एतयोस्तृचयोर्वाङ्गनिधने क्रौंचेप्रभाइन्द्रोसहस्त्रभर्णस इत्ये-
तस्मिन्पादे प्रभासापनयोस्तृतीये पादे नहिवामापद्यते । नहिवान-
हिवश्चश्वप्रश्वने द्वितीये साम्नि प्रथमे पादे *अग्निर्वोत्राजीयउपान्त्य-
कृष्ट८ सर्वासु* अग्निंवोदेवमग्निभिरित्यत्र रायोवाजीये प्रतिस्तो-
त्रीयं द्वितीये पादे उपान्त्यमक्षरं कृष्यते योनौ तु स्वादोरित्थायां
द्वितीये पादे उपांत्यमक्षरं न कृष्यते । अतोवचनंगौरीयाइति ।
*त्रिकवत्सायांचाद्ययोः* त्रिकवत्सायां चाद्ययोः स्तोत्रीययोः
द्वितीये पादे उपान्त्यमक्षरं न कृष्यते । अत्र च द्वितीये पादे यत्पूर्वं
तत्रोपांत्यमक्षरं कृष्यते । एवं द्रष्टव्यं । इतरथा नैवात्र पादः परि-
समाप्यत इति संदेहः स्यात् *प्रथमायां चतुर्थमुत्तरयोः पंचमं*
नित्यवत्सायामेव योनौ आधात्स्वरात्परस्तात् एतस्मात्परस्ताच्च-

त्रिकवत्सायांवाद्ययोः प्रथमायांचतुर्थमुत्तरयोः पञ्चम-
ं्स्वासु वैराजे तृतीये प्रथमान्त्येवृद्धेऽप्रस नार्मेद्वितीया-
यां्ं राधायांतृतीयमयोनौ कौत्सदं्ष्ट्रोत्तराकूपारं्श्रु-

त्पर्वे तत्र चतुर्थमक्षरं कृष्यते । तत्र त्रिकवत्सायामाद्यायां स्तोत्रीयायां आस्वरात्परस्तात् ताराद्याध्म एतस्मात्प-रस्तात् अन्यत्र आद्याएतयोः परस्तात्पर्वे तत्र पंचममक्षरं कृष्यते *स्वासु वैराजे तृतीये प्रथमान्त्ये वृद्धे* महावैराजे स्वासु सर्वासु स्तोत्रीयासु (तृतीये पादे द्वितीये पर्वणि प्रथमा-न्त्ये अक्षरे वृद्धे भवतः। द्वितीयेष्वपि पादेष्वेवमेवेति चेत् । न । तत्राव्यभिचारात् अदोषः *अप्रस *अकारः प्रतिषे-धार्थः।)(१) तृतीयेपादे द्वितीये पर्वणि प्रथमान्त्ये अक्षरे वर्द्धते इत्यस्यापवादः प्रशब्दसशब्दौ न वर्द्धेते इति । सर्व्वामिद्रमइमाब्र-ह्मा *नार्मे द्वितीयायां्ं राधायां तृतीयमयोनौ* नार्म्मेधे द्विवसोराधे ऊर्जापाताचताचतासभाइति च । अत्र द्वितीयायां वसोराधायां ऊहगीतौ तृतीय मक्षरं वर्द्धते द्विवोदाइवा । वाहासु-वा । इंद्रं विश्वायां च योनिवर्जं । योनौ तु द्वितीयायां वसोरा-धायां तृतीयस्याक्षरस्य वृद्धिप्रतिषेधः *कौत्सदं्ष्ट्रोत्तराकूपार-ं्श्रुध्यपृश्निमानवाद्यरुणवैधृतवासिष्ठतिथकुभनि त्रेषु च नौ*अ-संबद्धप्रायमिदं सूत्रं छात्रभोजनन्यायेन कस्मिश्चित्किंचिद्वर्द्धते । ऐडकौत्से याहींद्रेतिप्रस्तावाद्यस्य योनावेव अकारस्य वृद्धिः। परिसं-ख्यानार्थं वचनं अभीनोवादिषु प्रस्तावादिषु प्रस्तावाद्यस्य वृद्धिप्रति-षेधः। उत्तरे आष्टां्ंदष्ट्रे तृतीये पादे द्वितीयमक्षरं योनावेव वर्द्धते ।

---

(१) ( ) एतदन्तर्गतो पाठः पुस्तकद्वये नास्ति, तथापि एक स्मिन् वर्त्तते इति स्थापितः ।

ध्यपृश्निमानवाद्यरुणवैधृतवासिष्ठातिथकुभानित्रेषुचनौ तीषंगशाक्वरयोराधांतोऽयोनौ ग्निस्वीवारे रिंनुरयि शोके मनूगोभिस्त्रिणिधने सौहाविषरंध्रोत्तरयोर्गोभिरिलान्दस्वान्त्याद्यमुपान्त्यमयोनौ ॥ ८ ॥

---

तथा उत्तरे द्ध्ष्ट्रे।एतदुक्तं भवति। आकूपारे यदिंद्रचित्रायां द्वितीयेपादे द्वितीये पर्वणि दूराधसायाउं तृतीयमक्षरं योनावेव वर्द्धते। श्रुध्येप्रतिहाराद्द्वितीयस्य योनावेव वृद्धिः। वरुणसाम्नि घृतवत्यां द्वितीयेपाद अष्टममक्षरं(कृष्यते)वर्द्धते। वैधृते च वासिष्ठ एषप्राकोशायां मध्यमयोः पादयोः द्वितीयमक्षरं योनावेव वर्द्धते। अभिप्रियाण्यां प्रतिषेधः सर्वेषामेतषामूहगीनौ प्रतिषेधः आतिथकुभानित्रेषु च एतेषु अप्येवमेव परिसंख्यानार्थं वचनं। दैवातिथे आद्यायामेव स्तोत्रीयायां तृतीयपादाद्यमक्षरं वर्द्धते त्रैककुभे च उद्गीथाद्यस्य योनावेव वृद्धिः। पूर्वे च जनित्रे प्रतिहाराद्यस्य योनावेव वृद्धिः *तीषंशाक्वरयोराद्यान्तः* अतीषङ्गे रहस्ये च शाकरवर्णे आद्यान्तो वर्द्धते यदिन्द्रचित्रअर्षासोमवृचयोः *अयोनौ* योनावेव तयोरायानयोः वृद्धिप्रतिषेधः। उग्रं अतीषङ्गसानुः शाकरपर्णे। *ग्निस्वीवारे* क्षुद्रवारवन्तीये द्वितीये पादे द्वितीये पर्वणि द्वितीयस्याक्षरस्य एतयोरेव वृद्धिरन्यत्र प्रतिषेधः परिसंख्यानेन पदं दध्यात्। अग्निसुन्मवानस्वीरिति। *रिंनुरयि शोके* त्रैशोके च रिनुः। अपि च एतेषामक्षराणां वृद्धिः सजूरानक्षुरा इन्द्रअजनूराः। अपिकर्णे *मनूगोभिस्त्रिणिधने* अग्नेस्त्रिणिधने अरूपेगोमान्नोभिरिति भिशब्दस्य वृद्धिः *सौहाविषरन्ध्रोत्तरयोर्गोभिः* *सौहविषे उत्तरे च रुक्मणारन्ध्रे गोभिःशब्दस्य वृद्धिः। गोभिः श्रीणान इति। सौहविषे गोभिः जात इत्यौक्ष्णोरन्ध्रे *इलान्दस्वान्त्या-

यस्तेहरेच इयेनेदानींधरां प्रोवाराह ऊताकयास्थिरां द्वितीयमकर्षणं धर्तासाविसोच यसुसफेमादात्र्यक्षरां देव्येमहूद्वितीयेमथतां वैराजेयोनावन्त्ययोर्नतं वै-

---

यमुपान्त्यम् *इळान्दे तृतीये तु गाने बृहद्भानोशवसा इत्येतस्मिन् गानेन आद्यम् । किमुक्तं भवति । अदर्दरुत्समसृजा इत्यत्र । आद्यं यत्पर्व योनिसंज्ञितं आद्ये साम्नि इत्यर्थः । तस्य तृतीये तु गाने उपान्त्यमक्षरं वर्द्धते *अयोनौ *अयोनौतुपान्त्यग्निरित्यनुगाने एवं उपान्त्यस्याक्षरस्य वृद्धिप्रतिषेधः प्रथमे पादे ।

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये दशमप्रपाठकस्याष्टमी कण्डिका ।

*यस्तेहरेच* यशोमदायां च वार्षाहरे अविशेषोपदेशात्सर्वपर्वणां उपान्त्यस्य वृद्धिः । योनौ तु ध्यमयोः पादयोर्व्यभिचारादिदमुच्यते । योनिवद्भात्रोमाभूदितिस्त्वमेतद्वोहाइ इत्यत्र *इयेनेदानीध्वरां* गोविच्छयेनेनायोनिदृष्टाइहाष्टमे पर्वणि ध्वरामापद्यते सोमश्चा दानायवइन्द्रायामाद्ये साम्नि दा ३ नां २ *प्रोवाराहऊताकय स्थिरां* प्रोवाराह अन्त्ये याउभएका कयास्थिरामापद्यते अन्त्येष्वेव च पादेषु *द्वितीयमकर्षणं* एतेष्वेव वाराहत्रासिष्ठेषु अन्येषु अन्येषु पादेषु द्वितीये स्वरे प्रकर्षणमासीत् । योनौ तु द्वितीयकर्षणं न भवतीत्यर्थः *धर्तासाविसो च* वासिष्ठे द्वितीयस्वरे तुकर्षणं कांपा न भवति इत्यर्थः *यसुसफेमादात्र्यक्षरां* योनिदृष्टात्र्यक्षरा प्रहूयसा आसीत् सा त्रिकद्रुकायां द्वितीयेनामापद्यते इडानां *देव्येमहूद्वितीयेमथतां* । पश्वनिधने वामदेव्ये कयानायां द्वितीये पादे या प्रहूयसा आसीत सा त्रिकद्रुकायां द्वितीये पादे अमन्थतामापद्यते । अमन्थतात्वामग्नेपुष्कराद्धीत्यत्र *वैरा-

श्वमनसेत्वा स्तोभार्चिकसंधेर्ग्रहणात्सप्रेद्वितीयांतेप्रो-
त्तमायामाद्ये शौक्तेचाद्ययोः शौक्तेच सुषाश्रीणप्रत्नं्ँरु-
णसाम्नि इलांदेहीषीप्रभृत्युद्धारोऽन्त्यायामनुद्धार स्तम-
सोर्कैयोनावाद्ययोर्मागायतो दूघातनिघातौ ॥ ९ ॥

---

जे योनावन्त्ययोर्नतं* महावैराजे योनौ आद्यायामन्त्ययोः पा-
दयोर्विनतं भवति। अन्यत्र प्रतिषेधो न भवतीत्यर्थः। *वैश्वम-
नसे त्वास्तोभार्चिकसन्धेर्ग्रहणात्* वैश्वमनसे संश्लेषो भवति।
जसआकलशमित्यत्र। कस्मात्। अत्वात्। अत्वोपदेशादि-
त्यर्थः। जसावैश्वमनसा इति। यदि पुनस्तत्र चौषसन्धिन्यायेन सं-
श्लेषः क्रियते तथासति अत्वोपदेशोऽनर्थकः स्यात्। किञ्च स्तो-
भार्चिकसन्धेर्ग्रहणादेव संश्लेषो भवति। नान्यथा। कथमयं
स्तोभार्चिकसन्धिरिति। उच्यते। यो सौ आकारः अत्वमापादितः
स्तोभः स इत्यभिप्रायः *त्सप्रे द्वितीयान्तेप्रोत्तमायामाद्ये* वात्स-
प्रे द्वितीयान्त्ये पादे नीचादी भवतः। प्रथमायांस्तोत्रीयायां उत्तमा-
यामाद्ये वात्सप्रे अन्त्यायां स्तोत्रीयायां प्रथमद्वितीये पादे नीचादी
भवतः *शौक्ते चाद्ययोः* त्रैशोके चाद्ययोः स्तोत्रीययोर्यथा-
सम्भवं पादादयोनीचा भवन्ति *शौक्ते च* शौक्ते चाद्ययोः
स्तोत्रीययोः पादादि नीचैः। *सुषाश्रीणप्रत्नंँहणसाम्नि *वरु-
णसाम्नि एते शब्दाः प्रतिहारविषये नीचा भवन्ति *इलान्दे इही-
षीप्रभृत्युद्धारः *इलान्दे तृतीये तु गाने बृहद्भानोश इत्येतस्मिन्
हीषीप्रभृत्युद्धारः सूवा एषाहीषी एतस्याः परस्तात्सर्वे स्तोभाउ-
दुध्रियन्त इत्यर्थः। *अन्त्यायामनुद्धारः* एतस्मिन्नेवानुगाने अ-
न्त्यायां विधायां दाशुषे कात्रे इत्येतस्यामनुद्धारः *तमसोऽर्के
योनावाद्ययोर्मागायतोदूघातनिघातौ *महादैर्घतमसे योनावाद्यावि-

अथोहगीतीनां प्रस्तावोद्देशः स्तोभः पुरस्तादंत-

त्यर्थः । अन्त्ययोः स्वस्तोत्रीययोः मागायता उद्घातानिघातौ प्रतिभवतः । वाक्यशेषः । कस्माद्भेदेनोपन्यासः योनावन्त्ययोश्चेति । उच्यते । धर्मभेदात् । आद्यायामुद्घातं मागायता उत्तरयो निर्घातं प्रतीयतोभेदेनोपन्यासः उद्घात इत्युच्चप्रतीत्यर्थः । निघात इति नीचप्रतीत्यर्थः । आद्यायां सोममिन्द्रमापाशब्द उच्चप्रत्ययः प्रत्ययामादापूजिशः शब्दोनीचेवर्तते । सुपेमघवन् छन्दोनीचप्रत्ययः पर्वणां भेदं कृत्वाआत्मनोनुस्मरणार्थं केनापि कृतम् ।

इति उपाध्यायाजातशत्रुकृते पुष्पभाष्ये दशमस्य
नवमी कण्डिका ।

*अथोहगीतानां प्रस्तावोदेशः* कोऽस्याभिसम्बन्धः । उच्यते भावाः परिसमाप्ताः । तेषां च भावानां भक्तिसम्बन्धेन लक्षणमुक्तं । स्तावोपान्त्यं दैव्ये येसूक्ते तरेहारादि उपायद्वितीयं काण्वे योनौ निधने हीषीस्थॐसर्वत्रेति । अतः तासां भक्तीनां विज्ञानार्थमाह । अथोहगीतीनामिति । यद्येवं सर्वभक्तीनामेव लक्षणोद्देशोवक्तव्यः । कुतः । यस्मात्सर्वभक्तिसम्बन्धेन भावानामुपदेशः कृतः । अथ कस्मात्प्रस्तावस्यैव केवलस्य लक्षणमुद्दिश्यत इति । उच्यते । एवमेतत् । किंतर्हि ? सूत्रकारेण पञ्चविधोपग्रन्थकारादिभिः प्रतिहारनिधनयोर्लक्षण मुक्त्वा ततः अथातः प्रतिहारस्य महाप्रपञ्चेन प्रतिसामानुक्रमणं कृतं । प्रस्तावलक्षणं नैवोक्तं ।

सूत्रे पाञ्चविध्ये च लक्षणमात्रं उपदिष्टं । नतु प्रतिहारवद्विस्पष्टमुक्तं । अतोविस्पष्टीकरणार्थं आद्यत्वान्मुख्यत्वाच्च प्रस्तावस्य विशेषलक्षणमाह । उद्गीथोपद्रवौ तु परिशेषसिद्धौ

र्वा (क) प्रस्तोतुरंतेवा विधाद्य उद्गातुस्तकारावर्षभ-
पावमानजनित्राणां हुवादिर्वासिष्ठे पद्योनादेशे द्य-

तस्मादाह । अथोहगीतीनां प्रस्तावोद्देशइति । अथ भावानन्त-
रमूहगीतीनां साम्नां प्रस्तावोद्देशः । उद्देशोलक्षणमुच्यते । प्रस्ता-
वस्य लक्षणं वक्ष्याम इत्यर्थः । तदेतत्प्रतिज्ञासूत्रम् । *स्तोभः
पुरस्तादन्तर्वा प्रस्तोतुः* *तस्य प्रस्तावस्य पुरस्ताद्यः स्तोभः स
प्रस्तावाङ्गं भवतीत्यर्थः *अन्तर्वा* अन्तरशब्दोमध्यवाची मध्ये च
प्रस्तावस्य यः स्तोभः सप्रस्तावाङ्गं भवति यथापुरस्तात् स्तोभः
आश्वसूक्त पूर्वयौक्ताश्वैडयास्याभिनिधनकाण्वादारसदिडासंक्षारा-
दिषु । मध्ये च यथा गौषुक्तसौमे माधुच्छन्दसवाचः सापात्नीषादी-
यहाविष्कृतादिषु क्वचिदुभयं यथाभावे *अन्ते च *प्रस्तावस्य
यः स्तोभः प्रस्तावांगभवति । यथा पौरुमद्रऔर्द्धुनद्मनश्यैत-
श्चिधनिधनायास्यादिषु *अविधाद्यः* किं सर्व एव प्रस्तावान्त्यः
स्तोभः प्रस्तावाङ्गं भवति । न । अविधाद्यः । अकारः प्रतिषेधा-
र्थः । विधाद्यस्तु उद्गीथाङ्गमेव भवति । किमुक्तं भवति । प्रस्ता-
वात्परायां विधा तस्या आदौ यः स्तोभोऽयवास्थितः तस्या अङ्ग-
भूतः स न प्रस्तावाङ्गं भवति । किं तर्हि । तद्विधाङ्गमेव भवति
उद्गीथांगामित्यर्थः । यथा आथर्वणवार्षाहरऐडस्वरपञ्चानिधनवै-
रूपऐडसाकमश्वादिषु संक्रतिनि च प्रस्तावपक्षे । उद्गातुस्तु का-
ण्वर्षभपावमानजनित्राणां* तुशब्दः पूर्वलक्षणप्राप्तनिवर्त्तकः एते-
षु सामसु पूर्वलक्षणेन अविधाद्यत्वात्प्रस्तावाङ्गत्वे प्राप्त उद्गीथा-
ङ्गं भवतीत्यर्थः । *हुवादिर्वासिष्ठ *इहापि पूर्वलक्षणेन कृत्स्न-
स्तोभस्य प्रस्तावाद् द्वित्वे प्राप्ते एकदेशस्य उद्गीथाङ्गत्वमुपादिश्यते ।
हुवादिस्तोभः उद्गातुर्भवति । वयमेतेवासिष्ठेहुवेहोईएवमुद्गातुर्भ-
वति *पद्योनादेशे* सर्वत्र सर्वसामसु पद्यः प्रस्तावोभवति ।

आदेशे तु यथादेशं, यथा सहस्रगीतिषु सर्वेष्वेव यथा ऐडयामडे-
डमांडवत्रासदस्यवप्रगायतायोनिधनवैश्वज्योतिषायंपूषाक्रौंचप्रव-
र्ग्यागिवदैवोदासवाङ्निधनक्रौंचलौशऐडकाववयज्ञसारथिपर्याकूपार-
वैधृतवासिष्ठशैखांडिनानि पदवित्प्रस्तावानि । एतेषु पादः प्रस्ता-
वोभवति वासिष्ठं मरायामाष्टादंष्ट्रसंक्रोशमहावैश्वामित्रचतुर्थवैदन्व-
तप्लवनिहवार्कपुष्पसामराजपार्गीयवपार्थवाहद्यौतानत्रैष्टुभानित्रैस-
पात्रेषुभानुष्टुभवात्सप्रस्वारत्वाष्ट्रीसामद्वयस्वाराश्वज्ययासवैश्वज्यो-
तिषप्रथमोत्तमवाजजित कुत्सस्याधिरथीयारिष्टास्वाशिरामकाग्नेरर्की-
दीर्घतमसोर्कभ्राजोऽत्यभ्राजेविकर्णभासाऽग्नेर्वैगोत्तरवाकजंभप-
दनिधनवामदेव्योत्तरमरुतांसंस्तोभोद्बद्धलवद् समहसमातृका-
घोभयतः संसर्पोत्तरोभर्गीश्वनेर्व्रतद्वयायाव्रतोभमपूर्वगवां व्रता-
निग्निपीयामानिधनानि स्तोभपदविभाग्यानि । एतेषु आद्य-
स्तोभसहितः प्रस्तावो भवति । उत्तरस्यस्तोभविभाग्यत्वादु-
द्गीथाङ्गमेवेत्युक्तं । अन्यानि स्तोभविभाग्यानि तेषु वक्ष्य-
ति । स्तोभउपायान्तः पदनिधनेष्विति । विषयभक्तिष्वाम-
हीयवादिषु कथमिति चेत् ? उच्यते । विषमभक्तिष्वपिपद्य-
एवप्रस्तावोभवति, किं सर्वेष्वेव ? न । यान्यस्यां काण्डकायां
विषमभक्तीनि उच्चारितानि, तद्वर्जमन्येषु सर्वेषु विषमभक्तिषु पद्यः
प्रस्तावोभवति । यथाऽऽमहीयवरौरवयौधाजयवामदेव्यनौधसका-
लेयसंहितसफपौष्कलश्यावाश्वान्धीगवादीनि । यत्र पुनः पादै-
कदेशाभ्यासः तत्र कथमिति ? यथा मरायवात्सप्रेशिखण्डिन-
दीर्घतमसोर्कादिषु । उच्यते । तत्रापि सामाभ्यास एव पादः
प्रस्तावोभवति । कुतः । कृत्स्नपादाभ्यासे वचनारम्भात् पादो-
ऽभ्यस्त इति । तेन पारिशेष्यादेकदेशाभ्यासे साभ्यासः पादः प्र-
स्तावोभवतीति सिद्धं ।

क्षरोवासंकृतिदार्ढच्युतयोश्चतुरक्षरोवासुरूपाजिगैड-
साकमश्वानां सदेवतोवाराजनशाकरर्षभयो द्विपात्सं
जयना नदगौश्रृंगरात्रिदैवोदासानां कावश्रौतकक्षा-
र्षभत्र्यंतायास्यैडौक्षणोरंध्रैडसौपर्णमोत्क्षमार्गीयवज-

---

*त्र्यक्षरोवासंकृतिदार्ढच्युतयोः*पञ्चोवाचाशब्दात् । *च-
तुरक्षरोवा सुरूपाजिगैडसाकमश्वानां *एतेषां सुरूपादा-
नां चतुरक्षरोवा प्रस्तावोभवति । सुरूपैडसाकमश्वयोः । स-
स्तोभश्चविभाज्यत्वात् प्रस्तावाङ्गंभवति । अन्तेचाविधाय्यइति
वचनात् *सदेवतोवाराजनशाकरर्षभयोः* राजर्षनशाकरर्षभयोः
सदेवतः पादः प्रस्तावोभवति । पादः प्राप्त एव गृह्यते । पद्यो
नादेगच्छति विशेषेणार्थपारिसंख्यानभयादेवनार्थ आरम्भः । देव-
तासूत्रास्तोभत्वाद्वचनारम्भः । अन्ये त्वधीयते—सदैवतोवाराज-
नशाकरर्षभयोरेतेषां विकल्पः सदेवतोवा देवता विनाच *द्विपा-
त्संजयनानदगौश्रृङ्गरात्रिदैवोदासानां* एतेषां साम्नां द्वौद्वौ पा-
दौ प्रस्तावोभवति *कावश्रौतकक्षार्षभत्र्यन्तायास्यैडौक्षणोरंध्रैड-
सौपर्णमोक्षमार्गीयवजराबोधीयपद्वाहिष्ठीयोत्सेधवाभ्रस्वारसामरा-
जपौरुमीढपूर्वंवारवन्तीयवार्त्रतुरयरावत्रैरूपहस्त्वांबृहदोपशामहा-
दिवाकीर्त्यानां वातः* एतेषां कावादीनां वाशब्दान्तः प्रस्तावो-
भवति स्तोभश्च यथान्यायं भवति । अन्तेचाविधाय्यइत्यनेन न्यायेन ।
यथा त्र्यन्तायास्यैडौक्षणोरन्ध्रैडादीनां सहस्तोभेन वा शब्दान्तः
प्रस्तावोभवति । महावैष्टंभत्र्यैतद्विनिधनायास्यसौभरसत्रासाही-
यश्रुध्यवरुणसामसदोविशीयाभिवर्त्तवाभ्रादीनां वान्तत्वेप्यग्रहणं
न्यायसिद्धत्वात् । पद्योऽनादेशइति अविधाय्यइतिस्तोभस्य प्राप्ति-
रिति । अन्तग्रहणं कावादीनां केषां चित्पदमतीत्य प्रस्तावो भवति

राबोधीयपक्षाहिष्ठीयोत्सेधवाग्नस्वारसामराजपौरुमी-
ढपूर्ववारवंतीयवार्त्रतुरयणववैरूपहस्वाबृहदोपशामहा-
दिवाकीर्त्यानां वातः कृष्टाद्वृष्णो द्विर्वावारवंतीय-
आत्मनिचमहादिवाकीर्त्ये यांतोदाशस्यत्यभासशांम
दगायत्र्यासितानां जारांतोर्वीकवासिष्ठप्रियपत्राणां
वारांतोवैश्वामित्रे हाउकारांतः संतनिजमदग्न्याभीव-
र्तकार्तयशाकारांत त्वाष्ट्रीसाम्नां जाराग्निंदूतोपक्रमा-

---

केषांचिदर्द्धपदं प्रस्तावः। अतोवैलक्षण्यात्कावादीनां पृथग्ग्रहणमुक्तं
*कृष्टाद्वृष्णः* वृद्धिकृष्टात्परोयोवा शब्दः तदन्तःप्रस्तावो भवति ।
वाशब्दादुत्वाव कृष्टात्परइति विशेषणार्थमाह । कृष्टादूष्ण इति ।
इन्द्राउवापावमन्तः *द्विर्वावारवंतीये*पूर्वे वारवन्तीये द्वौ वाश-
ब्दौ तत्र आद्ये प्राप्ते विकल्पमाह । द्विर्वाशब्दान्तः प्रस्ताव इति
सकृद्वेति *आत्मनि च महादिवाकीर्त्ये* पूर्वसूत्रेणादावेवैको-
वान्तः प्रस्तावःप्राप्तः । अनेन सूत्रेणात्मनि च द्वितीयोविहितः ।
आदावात्मनि द्विर्वाशब्दान्तःप्रस्तावोभवति समुच्चयेन नतु विक-
ल्पः *यान्तोदाशस्य त्यभासशांमदगायत्र्यासितानां *एतेषां
चतुर्णां दाशस्यत्यादीनां याशब्दान्तः प्रस्तावोभवति । ऐडकौ-
त्सादीनां यान्तत्वेऽप्यग्रहणादुक्तः परिहारः । कावश्रौतकक्षार्षभेत्येते-
तस्मिन्नुपुत्र *जारान्तोर्वीकवासिष्ठप्रियपत्राणां* एतेषां त्रयाणां
वोड्कादीनां जारान्तः प्रस्तावोभवति *वारान्तोवैश्वामित्रे*सफपौ
ष्कलाक्तपरादीनांवारान्तत्वेऽप्यग्रहणं अत्रापि स एव परिहारः ।
*हाउकारान्तः सन्तनिजमदग्न्यभीवर्त्तकार्तयशाकारान्तत्वाष्ट्रीसा-
म्नां *एतेषां चतुर्णां हाउकारान्तः प्रस्तावोभवति । पृश्निदा-
वसुनिधनासितच्यावनहाविष्कृतपौरुमद्गगौतमादीनां । हाउका-

णांतएवाविभाग्यानाम् ॥ १० ॥

यौक्ताश्वैडयास्यत्रैशोकक्रोशश्रौष्टोद्द॰ँशपुत्रदैर्घतमसासिमानांनिषेधवैराजानां द्व्यक्षरो ऽभ्यस्तोद्व्यक्षरआ-

रान्तमप्यग्रहणं पूर्ववत् *जाराग्निदूतोपक्रमाणां तएवाविभाग्यानां* *जाराग्निदूतयाचयान्युपक्रमान्ते तानि जाराग्निदूतोपक्रमाणि । तेषां ते एव पर्वाणि प्रस्तावाभवन्ति । जारोपक्रमेषु जाराग्निदूतोपक्रमेष्वग्निदूता । यथात्रैष्टुभौशनाद्यवैदन्वदीर्घगूर्द्गायत्रपार्श्वशाक्करर्षभाथर्वणवार्णरेवतीनित्यवत्सावाजीयरथ्यअरण्येगेयद् । श्येनः यज्ञीयस्य चोत्तरयोः एतेषु जाराप्रस्तावोभवति । सुज्ञानत्वाष्ट्रीसामाद्यपार्श्वपूर्व्यमाणवाग्नेस्त्रिणिधनेषोदृधीवाजदावयोक्ष्णोरंध्राद्यावसर्दीखयन्तीत्वाष्ट्रीसामवात्सबाभ्रवकाशीतभारद्वाजाच्छिद्ररयिष्टबृहद्भारद्वाजकाशपूर्ववैष्णवौपगवपूर्वत्रिपूर्वावार्षाहिराद्यस्वरद्वदवस्थानाथर्वणातीषंगान्तारिक्षवाह्वाङ्गिरांजोवैरूपव्याहृतिसामानि । एतेषु सामसु अग्निदूताप्रस्तावो भवति । किमविशेषेणैव जाराग्निदूतयोः प्रस्तावार्थमिति । अविभाग्यानां साम्नामेषधर्मोभवति । जाराग्निदूते प्रस्तावः । विभाग्यानान्तु अग्निदूतासहितजारासहिहितोजारासहितश्च पद्यएव प्रस्तावाभवति । यथामरायदीशार्गदीर्घतमसोर्कारिष्टभर्गमुहावैश्वामित्रादिषु ।

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये दशमस्य दशमीकण्डिका ।

*यौक्ताश्वैडयास्यत्रैशोकक्रोशश्नौष्टोद्वं॰शपुत्रदैर्घतमससिमानांनिषेधवैराजानांद्व्यक्षरः *एतेषां यौक्ताश्वादीनां दशानां द्व्यक्षरः प्रस्तावोभवति । अत्र सहोदैर्घग्रहणं जारोपक्रमत्वे सिद्धेपिआदेरन्तद्धत्वात् । कृतं स्ताभेश्चैतेषु प्रस्तावाङ्गं भवति यथान्यायं *अ-

नूपैटतसौहविषवैष्णवोत्तरपर्योतः स्वराणामग्निंदू-
ताभ्यस्तामध्यमक्रौंचस्य पादोभ्यस्तोवषडंताभ्यस्ता-
कूपारराजनपयसां द्वादशाक्षराणि चरैवतर्षभे त्र्य-
क्षरोबृहत्के सोमसामगायत्रीक्रौंचवैरूपौदलगायत्र्यौ-
शनसैंधुक्षितमैधातिथरोहितकूलीयेहवदैध्मवाहेंद्रय-
शः कण्वबृहत्त्रैष्टुभ श्यावाश्वशौक्तवार्षाहरवाज-
भृत्कार्णश्रवसानांचत्वारि द्वेवांत्ययोः षट्शंकुबार्हत-

---

भ्यस्तोद्व्यक्षरआनूपैटतसौहविषवैष्णवोत्तरपर्योन्तः स्वराणाम्* ।
आनूपादीनां द्व्यक्षरः अभ्यस्तः प्रस्तावोभवति । द्वे द्वे अक्षरे
अभ्यस्त आद्ये प्रस्तावोभवाति । *अग्निंदूताभ्यस्तामध्यमक्रौंच-
स्य*अग्निंदूताभ्यस्तावोभवति *पादोभ्यस्तोवषडन्ताभ्यस्ता-
कूपारराजनपयसां *एतेषां वषडन्तादीनां चतुर्णां पादः अभ्य-
स्तः प्रस्तावोभवति । राजनस्येह पुनर्ग्रहणं विशेषणार्थं । तत्रो-
क्तं स्वदैवतः पादोभवतीति । इह त्वयं विशेषः । साभ्यासः
पादोभवतीति । दद्राणायां तुषडन्तेवैच्छन्दसत्वादेकदेशाभ्यासः ।
*द्वादशाक्षराणि च रैवतर्षभे *रैवतर्षभे च पादः अभ्यस्तः । द्वा-
दशैतान्यक्षराणि प्रस्तावोभवति षट्त्रिंशदक्षरऋषभस्यरैवतस्येति
*त्र्यक्षरोबृहत्के* त्र्यक्षरःप्रस्तावोभवाति *सोमसामगायत्रीक्रौंच-
वैरूपौदलगायत्र्यौशनसैंधुक्षितमैधातिथरोहितकूलीयेहवदैध्मवाहेंद्र-
यशः कण्वबृहत्त्रैष्टुभश्यावाश्वशौक्तवार्षाहरवाजभृत्कार्णश्रवसानां
चत्वारि* एतेषां सोमादीनां सप्तदशानां चतुरक्षरः प्रस्तावोभवति ।
स्तोभं यथान्यायमुक्तं *द्वेवान्त्ययोः *अन्त्ययोर्वाजभृत्कार्णश्रवस-
योर्द्वेवा अक्षरे प्रस्तावोभवाति चत्वारि वेतिविकल्पः *षट्शंकुबा-
र्हतवाजजित्स्वाररोहितकूलीयासितयौक्तस्रुचानाम् *एतेषां शंकादी-

वाजजित्स्वाररोहितकूलीयासितयौक्तस्नुवानामष्टा-
वौरुक्षयजागतसोमसाम्नोरेकादशोत्तरेजनित्रेद्वादशह-
रिश्रीयंते स्तोभउपायांतः पदनिधनेषु निधनंचतदं गं-
स्या द्विरेकवृषे त्रिर्वापदस्तोभेष्वि लांदाद्येत्रिरुक्तंयथो-

---

नां पंचानां षडक्षरः प्रस्तावोभवति *अष्टावौरुक्षयजागतसोमसा-
म्नोः* अष्टावौरुक्षयजागतसोमसाम्नोः*एकादशोत्तरेजनित्रे *उ-
त्तरे जनित्रे तंवोदस्मपुरोजित्योः एकादशाक्षरः प्रस्तावोभवति ।
*द्वादशहरिश्रीयन्ते* हरिश्रीनिधनेद्वादशाक्षरः प्रस्तावोभवति-
*स्तोभउपायान्तः पदनिधनेषु*येषां पदानि धनानि स्तोभ
भक्तीः प्रविभज्यन्ते तेषु पदनिधनेषु उपायान्तः प्रस्तावोभवति ।
स्तोभः प्रागृच उपायवान् स्तोभः पदपदनिधने एवंतदुक्तंभवति-
उदाहरणानि । यथा गोष्टप्रतोदसौमित्रधर्म्मभ्राजकीर्त्ययशः सं-
सर्पभद्रश्रेयोश्ववृत्तैकवृषोत्तरगवांत्रेतलांदाद्वितीयानुगानगनपदस्तो-
भादीनि एतेषु उपायान्तः प्रस्तावोभवति । *निधनं च तदंगं
स्यात्* तस्मात्प्रस्तावादूर्द्धं यत्पदानिधनं तत्प्रस्तावांगं अत्रोच्यते
सर्वप्रयोज्यत्वान्निधनस्याङ्गत्वे किं प्रयोजनं । उच्यते । कुशा-
निधाने प्रयोजनं अङ्गत्वे । निधनांतेकुशानिधानं भवति । त-
दङ्गत्वे प्रयोजनं । अन्ये तु ब्रुवते । अस्यमते न निधनमपि स्तो-
भविभाग्येसुप्रस्तोनप्रयोऽयमेवेतिवचनात् निधनं च तदङ्गं स्या-
दिति । तस्मादेष विशेषः *द्विरेकवृषे *पूर्वसूत्रे सकृदुपाया-
न्तः पदप्रत्ययः प्राप्तः अत आह । द्विरेकवृषइति । द्विः
उपायान्तः स्तोभः एकवृषेप्रस्तावोभवति पदप्रत्ययोदेवता-
प्रत्ययश्च । एवंवृषभस्योतापवन्तः स्तोभः पादानांनिधनत्वा-
दिति । उपासोगायत्वं । *त्रिर्वापदस्तोभेषु* । इडापि पूर्वं

क्रमितरेष्वंत्येवाद्यक्षरो महानाम्नीषुद्विपदासुप्रस्तावः शाक्करप्रथमेष्वध्यासपुरीषेषु च यथोपदिष्टं वैछंदसेषु-

---

वदेव सत्तऽपायांभः आद्यः स्तोभः प्राप्तः अतआह त्रिर्वापिदस्तो-भेष्विति। त्रिर्वानुपापान्तः स्तोत्रः प्रस्तात्रोभवति सतदेतिविक-ल्पः त्रयोवाउपायान्ताः स्तोभाः प्रस्तावोभवति। एकोवाउपा-यान्तः। *इलांदाद्येत्रिरुक्तं *इलान्दस्याद्येस्तोभिके अनुगाने-त्रिरुक्ते इलांदस्याद्ये स्तोभिके अनुगाने त्रिरुक्तं स्तास्रूपम्ना-वारवन्तीयमत्रत वसुरुसत्रासाहीयहि चंति पशीमतदिदाश्वेत अ-धपदिसदोविशीयत्रिष्टुद्रजगतीविषथज्ञायमत्तपी। यौधाजयं आ-जागृकिवित्तयो गौंहापितमपूषुश्च्यावाश्वांधीगवदेव्योकानिधन-आग्नेतमद्यायः पसाकमश्रविधुददाणवषडन्तोधर्मयानोधीगवगो-विच्छेनानि। पतेषुमातप्रास्ताविकमेवस्यात्। नपद्यः पद्योनादे-शइति अस्पायमपाहः। वैछन्दासेषुप्रास्ताविकमेवगान प्राप्तावो-भवति। नपद्य इति। अत्रइति। अप्रस्तादप्पक्तमेवतिषामहे आ-यम्निछन्दसियथान्यायमावायः। इति। तथाप्रस्तायमतिसराण-धनानामक्षपरिगाणंसर्वत्रयथायोनिविकीर्षोदिति। तस्माद्वैछ-न्दातेप्रस्ताविकमेवगीतप्रस्तावोभवति। तपडं। तयो। नोदो नो-पादोभ्यस्तप्रस्ताचेन्दद्राणायाङ्क्म्यादेक दिशाभ्यासइति। उ-च्यतेयानौ। अष्टाछरपादाभ्यासात्। षोऽशाक्षरः प्रस्ता। वो भवति। देवचतुर्थायोस्रूसस्तोभः पादः प्रस्तायोभवति। पद्यो-नादेशदूति वचनात्। पञ्चमेपिपद्यएवभवति। एवभवति। अ-स्य प्रतेनपञ्च। पनुगानेविविभाग्यः। अन्तवादृव्यक्षरः। *अत्ते पञ्चमे नु गाने पद्योवा प्रस्तावाभवति। व्यक्षपेतियिकल्पः। महानाम्नीषुदिपदासुप्रस्तावः शाकरप्रथमेष्वध्यासपरीपेपु च य-

गीतंप्रास्ताविकमेवस्या यण्वादीनामप्रस्ताव्याउत्तराः

---

थोपदिष्टं *महानाम्नीषुमदिष्टम्भवति। कथं चोपदिष्टमिति न-च्यते। द्विपडासु प्रस्तावः। शाक्वरप्रथमेष्वपि। पद्य एव प्रस्ता-वोभवति। पूर्ववत्। पशिक्षाशचीनां पता ३ई। १२ दाविष्टव-त्रिभजसा ३ई। १२ सनः स्वरिर्षदतिहिषाः। णेतत्रयः शाक-रप्रथमेषुपानादेश इति। अथाप्येतद्वेवलक्षणान्त्मध्यास्यांपुरीषप-देषुचजाराप्रस्तावोभवति। वचनात्। ताएग्रिद्तोपक्रगाणामिति अध्यासेषु। आयाद्क्रां ३ भूरोसाखा। पुरीषपदेषु आत इत्रां एषै वशब्दः पञ्चस्वपिपकैकस्मिनप्रस्तावाभवति। एत एवमहा-नाम्नीषपादिष्टं। वच्छरसषु गीतम्प्रास्ताविकमेचस्पाव *वैछन्द-सेष सामसु प्रास्ताविर्याद्राणायादेकदेशाभ्यास इति उच्यतेयो-नौ। अपक्षरपादाभ्यासाव। षोदशातरः प्रस्तावोभवति। द-द्राणान्तुएकादशाक्षरपादोयातः। एकदेशाभ्यासेः। तेवषोऽशा-क्षरः प्रस्तावोभवति। अतः पञ्चाक्षराभ्यासः। यरावादीनाप-प्रस्ताव्यादुत्तरायण्यानापञ्चानांन्प्रयत्पसन्तनिशाकरवर्णानांस्तो-त्रीया अप्रस्ताव्येषासन्तनिनः प्रस्ताव्येयासन्ततिनः। *वाश-ब्दोविकल्पार्थः। यण्वादिषु आधावहुत्तरमोः प्रस्तावलांमं एवं-सन्तति न्यपिप्राप्तं। तस्मिन्विफल्पमाह। वाप्रस्ताव्येउत्तरेसं-सन्तनिनः। वा अप्रस्ताव्ये इति विकल्पः। उत्तरयोरितिसिद्धं।

इतिपुष्पसूत्रभाष्यो कादशमीकण्डिका दशमः प्रपाठकः समाप्तः।

उपाध्यायाजातशत्रुकृतो। पाठकधनेश्वरस्पञ्पद्वायनायपास्ति-कालिखिता। उपाध्यायनरहासिसुतत्रुकासोमनप्राति। यथोक्तं यथालक्षणं भवति। कथं चोक्तं। द्वितीयेचातुगानेस्तोमपि भा-ग्य स्वाततः प्रस्तावोभवति। तृतीयदेवन्ततदेवप्रस्तावोभवति।

प्रस्ताऽयेवासंतनिनः प्रस्ताऽयेवासंतनिनः ॥ ११ ॥

इति पुष्पसूत्रे दशमः प्रपाठकः(१) ॥

पुष्पसूत्रं समाप्तम् ।

---

गीतमितिनभयथावर्णगितव्यं । क्वचिद्गीतशब्देनपर्वगृहीतव्य । ण्यवमालेये । क्वचिच्चतीतिशब्देनगानंगृह्यते । किंयुक्तम्भवति । प्रास्ताविकीयीतिः प्रास्ताविपाङ्गनगृहीतव्यमित्यर्थः । यथावि-रादत्रमिदेव्यो । उभयोहारुदाहरणानिवक्ष्यामः ।

इति पुष्पसूत्रभाष्यं समाप्तं ।

---

(१) अत्र प्रथमादर्शपुस्तके लेखकेन लिपिकाल एवं लिखितः । "सवत् १६७२ समयेशाद्रकृष्ण १ रवौ अथेहवाराणास्यांवस्तव्य आभ्यंतरनागरज्ञातीयत्रिपाठीविश्वनाथसुतत्रिपाठीगंगाधरसुतत्रिपा· ठी गोपीनाथ सुतत्रिपाठीपद्मनाभदीक्षितवेदपश्चाननेन लिखितं । त्रिपाठीपरमानन्दसुत विश्वनाथायदत्तं । विश्वनाथपुत्रपौत्राणां पठनार्थं । लेखकपाठकयोः शुभंभूयात् ।

५९ आपस्तम्बगृह्यसूत्रम्। श्रीहरदत्तप्रणीतयाऽनाकुलाख्यया व्याख्यया, श्रीसुदर्शनाचार्यप्रणीतया तात्पर्यदर्शनाख्यया व्याख्यया च समलङ्कृतम्, पृथक् सूत्रपाठेन, पाठभेदेन, मीमांसापदार्थविवरणेन च संयोजितम्। (कर्म० वि० ५) रु० ४—०

६० नाट्यशास्त्रम्। भरतमुनिप्रणीतम् (सम्पूर्णम्) साहित्योपाध्याय एम.ए. इत्यादिपदवीभाजा पण्डित बटुकनाथ शर्म्मणा तथा साहित्यशास्त्रि एम.ए. पदवीभृता पण्डित बलदेवोपाध्यायेन च सम्पादितम्। (नाट्यशास्त्र वि० १) रु० ५—०

६१ काव्यालङ्कारः। श्रीभामहाचार्येण विनिर्मितः। काशीविश्वविद्यालयाध्यापकाभ्यां पण्डित बटुकनाथ शर्मा एम० ए० साहित्योपाध्यायः तथा पण्डित बलदेव उपाध्याय एम० ए० साहित्यशास्त्री इत्येताभ्यां भुमिकादिभिः समलङ्कृत्य सम्पादितः, काशी विश्वविद्यालयोपकुलपतिपदं विभुषयद्भिः श्रीमदाचार्यप्रवरैः आनन्दशङ्कर ध्रुव महोदयैः लिखितेन प्राक्कथनेन सनाथीकृतः। (अलङ्कार वि० २) रु० १—८

६२ ब्रह्मवादः। गोस्वामि श्रीहरिरायजी महाराज विरचितः। श्रीगोपालकृष्णभट्ट विरचित विवरणाख्यव्याख्यासमलङ्कृतः। तथा गोस्वामी श्रीब्रजनाथविरचितो ब्रह्मवादः। तथा शुद्धाद्वैतपरिष्कारः श्रीमद्रामकृष्णभट्ट विरचितः। श्रीरघुनाथशास्त्रि विरचित शुद्धाद्वैतपरिष्कारतात्पर्यम्। श्रीहरिशङ्कर शास्त्रि-वेदान्तविशारदेन विस्तृत भूमिकया विविधपरिशिष्टैर्भाषानुवादेन टिप्पण्यादिना च समलङ्कृतः। (शुद्धाद्वैतसम्प्रदाय वि० १) रु० १—०

६३ प्रेमरसायनम्। श्रीविश्वनाथपण्डितरचितम् (का०वि०८) रु० १—०

६४ व्याप्तिपञ्चकरहस्यम् सिंहव्याघ्रलक्षणरहस्यं च। श्रीमथुरानाथतर्कवागीशकृतम्। न्यायाचार्य पं० शिवदत्तमिश्र विरचित गंगानिर्झरिणीव्याख्यया टिप्पण्यादि विभूषितं च। (न्या० वि० ८) रु० ०—१२

६५ सिद्धान्तबिन्दुः। श्रीमधुसूदनसरस्वती विरचितः। श्रीभगवान्शङ्कराचार्य विरचित दशश्लोकव्याख्यारूपः श्रीगौड ब्रह्मानन्दविरचित न्यायरत्नावली-नारायणतीर्थ विरचित लघुव्याख्या टिप्पणीसहितः। (वेदान्त वि० ८) रु० ५—०

६६ अन्त्यकर्मदीपकः आशौचकालनिर्णयसहितः। प्रेतकर्मब्रह्मीभूतयतिकर्मनिरूपणात्मकः। महामहोपाध्याय पं० श्री नित्यानन्द-पन्तपर्वतीय विरचितः। (कर्मकाण्ड वि० ६) रु० १—८

६७ सांख्यदर्शनम्। श्रीमद्विज्ञानभिक्षुकृत सांख्यप्रवचनभाष्यसमलङ्कृतम्। (सांख्य वि० १) रु० २—०

६८ अनेकार्थसङ्ग्रहो नाम कोशः। आचार्यश्रीहेमचन्द्रेण विरचितः। (कोश वि० २) रु० २—०

